KÂVYAMÂLÂ 25.

THE

# DHVANYÂLOKA

OF

ÂNANDAVARDHANÂCHÂRYA

With the Commentary of Abhinavaguptâchârya.

EDITED BY

PAṆDIT DURGÂPRASÂD

AND

KÂS'ÎNÂTH PÂṆDURANG PARAB.

PRINTED AND PUBLISHED

BY

THE PROPRIETOR

OF

THE "NIRNAYA-SÂGARA" PRESS.

BOMBAY.

1891.

*Price 1¾ Rupees.*




# ध्वन्यालोकः सलोचनः ।

अयं ध्वन्यालोको भागद्वयात्मकः. तत्रैको भागः कारिकारूपो ध्वनिसंज्ञकः, अपरस्तद्वृत्तिरूप आलोकसंज्ञकः. तत्र कारिकाणां वृत्तेश्च प्रणेता श्रीमदानन्दवर्धनाचार्य एवेति केषांचन मतम्. तथा च जह्लणसंकलितसूक्तिमुक्तावलौ राजशेखरनाम्ना समुद्धृतम्

'ध्वनिनातिगभीरेण काव्यतत्त्वनिवेशिना ।
आनन्दवर्धनः कस्य नासीदानन्दवर्धनः ॥'

एतत्पद्यमप्यानन्दवर्धनस्यैव ध्वनिकर्तृतां सूचयति. किंतु लोचनस्थितैः "अत एव मूलकारिका तन्निराकरणार्था न श्रूयते. वृत्तिकृत्तु निराकृतमपि प्रमेयसंख्यापूरणाय कण्ठेन तत्पक्षमनूद्य निराकरोति ।' (५९ पृष्ठे), 'तेनात्र प्रथमोद्द्योते ध्वनेः सामान्यलक्षणमेव कारिकाकारेण कृतम्. द्वितीयोद्द्योते कारिकाकारोऽवान्तरविभागं विशेषलक्षणं च विदधदनुवादमुखेन मूलविभागं द्विविधं सूचितवान् । तदाशयानुसारेण तु वृत्तिकृदत्रैवोद्द्योते मूलविभागमवोचत् ।' (५९ पृष्ठे), 'न चैतन्मयोक्तमपि तु कारिकाकाराभिप्रायेणेत्याह ।' (६० पृष्ठे), 'भवति मूलतो द्विभेदत्वं कारिकाकारस्यापि संमतमेवेति भावः ।' (६० पृष्ठे), 'एतत्तावत्त्रिभेदत्वं न कारिकाकारेण कृतम् । वृत्तिकारेण तु दर्शितम् ।' (१२३ पृष्ठे)," इत्यादिभिर्वाक्यैः कारिकाकर्तुर्वृत्तिकारो भिन्न इति स्फुटमेव दृश्यते. तत्र कोऽयं ध्वनिकारिकाकार इत्यनिश्चितमेव. वृत्तिकारस्तु राजानकश्रीमदानन्दवर्धनाचार्यः कश्मीरेषु खिस्ताब्दीयनवमशतकोत्तरभागेऽवन्तिवर्ममहीपते राज्यसमये प्रसिद्ध आसीदिति राजतरङ्गिणीतो ज्ञायते. एतत्पितुश्च 'नोण' इति नामासीदित्येतत्प्रणीतदेवीशतकतो बुध्यते. ध्वन्यालोकः, देवीशतकम्, विषमबाणलीला (प्राकृतम्), अर्जुनचरितम्, विनिश्चयटीकाया धर्मोत्तमाया विवृतिः (बौद्धग्रन्थः), एतद्ग्रन्थपञ्चकमेतत्प्रणीतं ज्ञायते. तत्र ध्वन्यालोकः, देवीशतकं चेति ग्रन्थद्वयमेवाद्यावध्यधिगतम्. काव्यालोकः सहृदयहृदयालोक इति च ध्वन्यालोकस्यैव नामनी. अस्मिन्ध्वन्यालोके च (१) अमरुकः, (२) अर्जुनचरितम्, (३) आदिकविः (वाल्मीकिः), (४) उद्भटः, (५) कादम्बरी, (६) कालिदासः, (७) कुमारसंभवम्, (८) तापसवत्सराजः, (९) धर्मकीर्तिः, (१०) नागानन्दनम्, (११) बाणः, (१२) भरतः, (१३) भामहः, (१४) भारतम्, (१५) मधुमथनविजयम्, (१६) रत्नावली, (१७) रामाभ्युदयम्, (१८) रामायणम्, (१९) विषमबाणलीला, (२०) वेणीसंहारम्, (२१) व्यासः, (२२) सर्वसेनः (हरिविजयस्य प्राकृतकाव्यस्य प्रणेता), (२३) सेतुः, (२४) हरिविजयम् (प्राकृतम्), (२५) हर्षचरितम्, एतानि प्रत्नानां ग्रन्थानां ग्रन्थकर्तॄणां च नामानि समुपलभ्यन्ते.

लोचनाख्याया ध्वन्यालोकटीकायाः प्रणेतारो महामाहेश्वराचार्यश्रीमदभिनवगुप्तपादाचार्या अपि खिस्ताब्दीयदशमशतकोत्तरभाग एकादशशतकारम्भे च कश्मीरेष्वेवासन्निति तत्कृतबृहत्प्रत्यभिज्ञाविमर्षिणीसमाप्तौ 'इति नवतितमेऽस्मिन्वत्सरेऽन्त्ये युगांशे तिथिशशिजलधिस्थे (४११५) मार्गशीर्षावसाने' इत्यादि पद्यात्प्रतीयते. श्रीलक्ष्मणगुप्तः, भट्टेन्दुराजः, भट्टतौतः, इति त्रयोऽप्युपाध्यायाः; वराहगुप्तः पितामहः; चुखलो नाम जनकः; मनोरथगुप्तोऽनुजः; कर्णक्षेमराजाद्याश्च शिष्याः श्रीमदाचार्याभिनवगुप्तानामासन्नित्यपि तत्प्रणीतग्रन्थेभ्यो ज्ञायते. ग्रन्थाश्चाचार्यप्रणीतग्रन्थेभ्योऽस्मदवगता एते—(१) अनुत्तराष्टिका, (२) काव्यकौतुकस्य (भट्टतौतकृतस्य) विवरणम्, (३) क्रमस्तोत्रम्, (४) घटकर्परकुलकविवृतिः, (५) तन्त्रवटधानिका, (६) तन्त्रसारः, (७) तन्त्रालोकः, (८) देहस्थदेवताचक्रस्तोत्रम्, (९) ध्वन्यालोकलोचनम्, (१०) नाट्यलोचनम्, (११) परमार्थचर्चा, (१२) परमार्थद्वादशिका, (१३) परमार्थसारः, (१४) परात्रिंशिकाविवरणम्, (१५) प्रकरणस्तोत्रम्, (१६) प्रत्यभिज्ञाविमर्षिणी बृहती वृत्तिः, (१७) प्रत्यभिज्ञाविमर्षिणी लघुवृत्तिः, (१८) बोधपञ्चदशिका, (१९) भगवद्गीताटीका, (२०) भारतीयनाट्यशास्त्रटीका, (२१) भैरवस्तोत्रम्, (२२) महोपदेशविंशतिः, (२३) मालिनीविजयवार्तिकम्, एतेषु काव्यकौतुकविवरणं क्रमस्तोत्रं नाट्यलोचनं प्रकरणस्तोत्रं भारतीयनाट्यशास्त्रटीका चेति ग्रन्थपञ्चकमपहाय सर्वेऽपि ग्रन्था अस्मदवलोकिताः सन्ति. ध्वन्यालोकलोचने च (१) अमरुकः, (२) अर्जुनचरितम्, (३) अस्मद्गुरवः, (४) भट्ट-इन्दुराजः, (५) उत्पलाचार्याः, (६) उद्भटः, (७) ऐतिहासिकाः, (८) कादम्बरीकथासारः (भट्टजयन्तप्रणीतः), (९) काव्यकौतुकविवरणम्, (१०) कालिदासः, (११) चन्द्रिकाकारः, (१२) जयन्तभट्टः, (१३) तापसवत्सराजः, (१४) भट्ट-तौतः, (१५) दण्डी, (१६) भट्ट-नायकः, (१७) भट्टः (मीमांसकः), (१८) भरतः, भरतशास्त्रम्, (१९) भर्तृहरिः, (२०) भामहः, (२१) भामहविवरणम्, (२२) मनोरथकविः (आनन्दवर्धनाचार्यसमकालभवः), (२३) मुनिः (भरतः), (२४) यशोवर्मा, (२५) रघुवंशम्, (२६) रत्नावली, (२७) रामाभ्युदयम् (यशोवर्मप्रणीतम्), (२८) वामनः, (२९) विक्रमोर्वशी, (३०) विनिश्चयटीकाधर्मोत्तमाविवृतिः, (३१) विवरणकृत्, (३२) विषमबाणलीला, (३३) स्वप्नवासवदत्ताख्यनाटकम्, (३४) हरिविजयम्, एतानि नामानि समुपलभ्यन्ते. तत्र चन्द्रिकाभिधा काचन ध्वन्यालोकस्य व्याख्या लोचननिर्माणात्प्रागप्यासीदिति 'किं लोचनं विनालोको भाति चन्द्रिकयापि हि' इत्यादिलोचनान्तस्थितपद्यतः, मध्ये मध्ये च तन्मतखण्डनतः प्रतीयते. स च चन्द्रिकाकारः श्रीमदाचार्याभिनवगुप्तपादानां कश्चन पूर्ववंशोद्भव इत्यपि तन्मतनिराकरणानन्तरं 'इत्यलं निजपूर्वजसगोत्रैः साकं विवादेन' (१२३ पृष्ठे), 'चन्द्रिकाकारस्तु पठित—इत्यलं पूर्ववंश्यैः सह विवादेन' (१८५ पृष्ठे) इत्यादिभिर्लोचनस्थैर्वाक्यैः प्रतीयते. लोचनं तु ध्वन्यालोकोद्द्योतत्रयस्यैव समुपलभ्यते, चतुर्थोद्द्योतस्य तु मूलमात्रमेव.

१. तद्देशप्रसिद्धे लौकिकाब्दे. कलिगताब्देषु पञ्चविंशतिरहितेषु शतेन तष्टेषु यदवशिष्यते स एव लौकिकाब्दः. २. कलियुगे. ३. एतत्क्रमस्तोत्रं षट्षष्टिमिते लौकिकाब्दे (९९१ खिस्ताब्दे) कृतमाचार्यैरिति तत्समाप्तिश्लोकाज्ज्ञायते. ४. एतद्भैरवस्तोत्रमष्टषष्टिमिते लौकिकाब्दे विहितमिति तत्समाप्तौ स्फुटम्.



अस्माभिस्तु सलोचनस्य ध्वन्यालोकस्य पुस्तकत्रयं संकलितम्. तत्र कश्मीरमहाराजाश्रितज्योतिर्विदुपाह्वविद्वद्वरश्रीदयारामशर्मणां पुस्तकस्य प्रतिरूपकं (१९३०) मिते विक्रमाब्दे कश्मीरानधिवसद्भिरस्माभिर्गृहीतं प्रायः शुद्धं क-संज्ञकम्.

अपरं विद्वन्मूर्धन्यभाण्डारकरोपाह्वश्रीरामकृष्णशर्मभिः पुण्यपत्तनस्थराजकीयपुस्तकालयस्थं पुस्तकं प्रहितमासीत्पूर्वतरे वर्षे. तदपि कस्यचित्काश्मीरिकपुस्तकस्य प्रतिरूपकं ख-संज्ञकम्.

तृतीयं मैसूरनगरस्थमरिमल्लप्पास्कूलसंस्कृताध्यापकैः आ० अनन्ताचार्यपण्डितैः कस्यचन शतद्वयवर्षप्राचीनस्य तालपत्रपुस्तकस्य प्रतिरूपकं तद्देशाक्षरसमुल्लसितं प्रहितम्. तत्तु ग-संज्ञकम्. तत्पठनं तु जयपुरस्थजैनपाठशालाध्यापकद्रविडकाशिनाथशास्त्रिणां साहाय्येन विहितम्.

इत्थं पुस्तकत्रयाधारेण कृतेऽपि मुद्रणे ग्रन्थस्यातिकाठिन्यात्पुस्तकानामनतिशुद्धत्वान्मतिमान्द्याच्चोर्वरितानवद्यान्विद्वांसः स्वयमपोहन्तु, भवन्तु च सानुकम्पा अस्मास्विति भद्रम्.

---

# ध्वन्यालोकस्य सूचीपत्रम् ।

# ध्वन्यालोकस्य शोधनपत्रम् ।

| पृष्ठम् । | पङ्क्तिः । | शुद्धम् । |
|---|---|---|
| ७ | ३ | परिकल्प्य तत्प्र- |
| ४५ | १ | व्यङ्ग्यस्ये त्यादिपद्यत्रयमालोकगतं न तु मूलकारिकारूपम्. |
| ८१ | १ | श्चार्थोऽनपेक्षित |
| ८७ | १० | रसवन्तीत्यादि पद्यत्रयमालोकगतं न तु ध्वनिकारिकान्तर्गतम्. |
| ८७ | ११ | निर्वर्त्यन्ते |
| ९२ | ११ | आक्रन्दाः स्तनितै |
| ९६ | ९ | विस्मयाख्यो |
| ९८ | ५ | एवंजातीयकः |
| १०५ | ५ | व्याजपूर्वम् ॥ |
| १०९ | ५ | तस्मात्तत्र वाच्यालं |
| ११८ | ७ | तथाविध |

| पृष्ठम् । | पङ्क्तिः । | शुद्धम् । |
|---|---|---|
| १४१ | ५ | कुलकानि |
| १४२ | ३ | टनिबन्धनौ |
| १४२ | ३ | समासादीर्घसमासे |
| १४५ | ४ | स्थायी भाव |
| १४७ | ११ | पर्यालोचयता |
| १५३ | २ | द्योत्योऽलक्ष्य |
| १५६ | ८ | चशब्दः |
| १७० | १५ | स नाङ्गि– |
| १७९ | ९ | अवधानातिशयवान् |
| २१७ | ३ | तुल्यरमणा |
| २२३ | ८ | 'अनाख्येयांश' इत्यादि वृत्तिकारकृतः संग्रहश्लोकः, न तु कारिका. |
| २३१ | ६ | निपुणा हि |

# काव्यमाला।

## श्रीमदानन्दवर्धनाचार्यप्रणीतो ध्वन्यालोकः।

श्रीमदाचार्याभिनवगुप्तविरचितया लोचनाख्यया व्याख्ययानुगतः।

### प्रथम उद्द्योतः।

स्वेच्छाकेसरिणः स्वच्छस्वच्छाया[1]यासितेन्दवः।
त्रायन्तां वो[2] मधुरिपोः प्रपन्नार्तिच्छिदो नखाः॥

[1]अपूर्वं यद्वस्तु प्रथयति विना कारणकलां
जगद्ग्रावप्रख्यं निजरसभरात्सारयति च।
क्रमात्प्रख्योपाख्याप्रसरसुभगं भासयति त-
त्सरस्वत्यास्तत्त्वं कविसहृदयाख्यं विजयतात्॥

भट्टेन्दुराजचरणाब्जकृताधिवासहृद्यश्रुतोऽभिनवगुप्तपदाभिधोऽहम्।
यत्किंचिदप्य[2]नुरणन्स्फुटयामि काव्यालोकं सु[3]लोचननियोजनया जनस्य॥

स्वयमविच्छिन्नपरमेश्वरनमस्कारसंपत्तिचरितार्थो[4]ऽपि व्याख्यातृश्रोतॄणामविघ्नेनाभी[5]ष्टव्याख्याश्रवणलक्षणफलसंपत्तये समुचिताशीःप्रकटनद्वारेण परमेश्वरसांमुख्यं करोति वृत्तिकारः—स्वेच्छे[6]ति। मधुरिपोर्नखा वो[7] युष्मान्व्याख्यातृश्रोतॄं[8]स्त्रायन्ताम्। तेषामेवं संबोधनयोग्यत्वात्। संबोधनसारो हि युष्मदर्थः। त्राणं चाभीष्टला[9]भं प्रति सां[10]हायकाचरणम्। तच्च तत्प्रतिद्वन्द्विविघ्नापसारणादिना भवतीति। इयदत्र त्राणं विवक्षितम्। नित्योद्योगिनश्च भगवतः संमोहाध्यवसाय[11]प्रतियोगित्वेनोत्साहप्रतीतेर्वीररसो ध्व-

१. 'विजितेन्दवः' ग. २. 'वः प्रपन्नार्तिच्छिदो मधुरिपोर्नखाः' ग.

१. क-पुस्तके टीकाप्रारम्भे "उपास्महे स्वानुभवैकवेद्यं स्वच्छन्दमानन्दसमुद्रमीशम्। व्याप्तं जगच्छक्तितरत्तरङ्गैरदृष्टपारं परमेष्ठिनापि॥' इह हि कश्चिद्विपश्चिज्जनमनोरञ्जनाय निजान्तेवासिवासनासंजननाय च दुर्हृदयोद्वेजितसहृदयसमुदायसमुत्तेजितः श्रीमदभिनवगुप्तपादोपदिष्टं शिष्टपरम्पराप्राप्तमभीष्टदेवतासंमुखीकरणरूपं ध्वन्यालोचने मङ्गलं विवृणोति" इत्यधिकमस्ति. २. 'अनुरणत्' क-ख. ३. 'स्वलोचन' ख. ४. 'अपि' ग-पुस्तके नास्ति. ५. 'अविच्छिन्नाभीष्ट' ग. ६. 'स्वेच्छेत्यादिना' ग. ७. 'वो' ग-पुस्तके नास्ति. ८. 'एवात्र' ग. ९. 'फललाभं' ग. १०. 'साहाय्यका—' क-ख. ११. 'प्रति' ग-पुस्तके नास्ति.

**'काव्यस्यात्मा ध्वनिरिति बुधैर्यः समाम्नातपूर्व-**
**स्तस्याभावं जगदुरपरे भाक्तमाहुस्तमन्ये ।**

न्यते । नखानां प्रहरणत्वे, प्रहरणेन च रक्षणे कर्तव्ये नखानामव्यतिरिक्तत्वेन करणत्वात्सातिशयशक्तिता[1] कर्तृत्वेन सूचिता । ध्वनितश्च परमेश्वरस्य व्यतिरिक्तकरणापेक्षाविरहः[2] । मधुरिपोरित्यनेन तस्य सदैव जगत्त्रासापसारणोद्यम उक्तः । कीदृशस्य मधुरिपोः । स्वेच्छया[3] केसरिणः । न तु कर्मपारतन्त्र्येण, नाप्यन्यदीयेच्छया । अपि तु विशिष्टदानवहननोचितात्तथाविधेच्छापरिग्रहौचित्यादेव[4] स्वीकृतसिंहरूपस्येत्यर्थः । कीदृशा नखाः । प्रपन्नानामार्तिं ये छिन्दन्ति । नखानां छेदकत्वमुचितम् । आर्तेः पुनश्छेद्यत्वं नखान्प्रत्यसंभावनीयमपि तदीयानां नखानां स्वेच्छानिर्माणौचित्यात्संभाव्यत[5] एवेति यावत् । अथवा त्रिजगत्कण्टको हिरण्यकशिपुर्विश्वस्योत्क्लेशक[6] इति स एव वस्तुतः प्रपन्नानां भगवदेक[7]शरणस्थितीनां जनानामार्तिकारित्वान्मूर्तैवार्तिस्तं विनाशयद्भिरार्तिरेवोच्छिन्ना भवतीति परमेश्वरस्य तस्यामप्य[8]वस्थायां परम[9]कारुणिकत्वमुक्तम् । किं च ते किंगुणाः । स्वच्छेन स्वच्छतागुणेन नैर्मल्येन । स्वच्छमृदुप्रभृतयो हि मुख्यतया भाववृत्तय एव । स्वच्छायया च वक्र[10]हृद्यरूपयाकृत्यायासितः खेदित इन्दुर्यैः । अत्रार्थशक्त्यनुरणनमूलेन ध्वनिना बालचन्द्रत्वं ध्वन्यते । आयासनेन[11] तत्संनिधौ चन्द्रस्य विच्छायत्वप्रतीतिरहृद्यत्वप्रतीतिश्च ध्वन्यते । आयासकारित्वं च नखानां सुप्रसिद्धम् । नरहरिनखानां तच्च[12] लोकोत्तरेण रूपेण प्रतिपादितम् । किं च तदीयां स्वच्छतां कुटिलिमानं चावलोक्य बालचन्द्रः स्वात्मनि खेदमनुभवति । तुल्येऽपि स्वच्छकुटिलाकारयोगेऽमी प्रपन्नार्तिनिवारणकुशलाः, न त्वहमिति व्यतिरेकालंकारध्वनिः । किं चाहं पूर्वमेक एवासाधारणवैशद्यहृद्याकारयोगात्समस्तजनाभिलषणीयताभाजनमभवम्, अद्य पुनरेवंविधा नखा[13] दश बालचन्द्राकाराः संतापार्तिच्छेदकुशलाश्चेति तानेव[14] लोको बालेन्दुबहुमानेन पश्यति, न तु मामित्याकलयन्बालेन्दुरविरतमायासमनुभवतीत्युत्प्रेक्षा[15]पह्नुतिध्वनिरपि । एवं वस्त्वलंकाररस[16]भेदेन त्रिधा ध्वनिरत्र श्लोकेऽस्मद्गुरुभिर्व्याख्यातः ॥ अथ प्राधान्येनाभिधेयस्वरूपमभिदधदप्रधानतया प्रयोजन[17]प्रयोजनं तत्संबन्धं प्रयोजनं च[18] सामर्थ्यात्प्रकटयन्नादिवाक्यमाह—**काव्यस्यात्मेति** । काव्यात्मशब्दसंनिधानाद्बुध-

१. 'शक्तता' ग. २. 'कारणापेक्षा' ख. ३. 'स्वेच्छाकेसरिणः' ग. ४. 'हननोचिततथाविधेच्छापरिग्रहादेव' ग. ५. 'संभावित' क-ख. ६. 'विश्वक्लेशकरण एवेति' ग. ७. 'तदेक' ख. ८. 'अपि' ग-पुस्तके नास्ति. ९. 'परम' क-ख-पुस्तकयोर्नास्ति. १०. 'चक्र' ख. ११. 'आयासेन' क-ख. १२. 'तच्च' क-ख-पुस्तकयोर्नास्ति. १३. 'नखा' क-ख-पुस्तकयोर्नास्ति. १४. 'एवं' ग. १५. 'इत्युत्प्रेक्ष्यते इत्युत्प्रेक्षापह्नुति' क-ख. १६. 'रस' ग-पुस्तके नास्ति. १७. 'प्रयोजन' ग-पुस्तके नास्ति. १८. 'तत्संबन्धिप्रयोजनं' ग.



**केचिद्वाचां स्थितमविषये[1] तत्त्वमूचुस्तदीयं**
**तेन[2] ब्रूमः सहृदयमनःप्रीतये तत्स्वरूपम् ॥ १ ॥'**

बुधैः काव्यतत्त्वविद्भिः काव्यस्यात्मा ध्वनिरिति संज्ञितः परम्परया यः समाम्नातः समाख्यातः, तस्य सहृदयजनमनःप्रकाशमानस्याप्यभाव-

शब्दोऽत्र काव्यात्मावबोधकनिमित्तक[1] इत्यभिप्रायेण विवृणोति—**काव्यतत्त्वविद्भिरिति** । आत्मशब्दस्य तत्त्वशब्देनार्थं विवृण्वानः सारत्वमपरशब्दवैलक्षण्यकारित्वं च दर्शयति । इतिशब्दः स्वरूपपरत्वं ध्वनिशब्दस्याचष्टे । तदर्थस्य[2] विवादास्पदीभूततया निश्चयाभावेऽर्थतत्त्वायोगात्[3] । एतद्विवृणोति—**संज्ञित इति** । वस्तुतस्तु न तत्संज्ञामात्रेणोक्तम् । अपि त्वस्त्येव[4] ध्वनिशब्दवाच्यं प्रत्युत समस्तसारभूतम् । नह्यन्यथा बुधास्तादृशमामनेयुरित्यभिप्रायेण[5] विवृणोति—**तस्य सहृदयेत्यादिना** । एवं तु युक्ततरम्[6] । इतिशब्दो भिन्नक्रमो वाक्यार्थपरामर्शकः । ध्वनिलक्षणोऽर्थः[7] काव्यस्यात्मेति यः समाम्नातः । शब्दपरामर्शकत्वे[8] हि ध्वनिसंज्ञितोऽर्थ[9] इति कासंगतिः । एवं हि[10] ध्वनिशब्दः काव्यस्यात्मेत्युक्तं भवेत् । गवित्ययमाहेति यथा । न च विप्रतिपत्तिस्थानमसदेव । प्रत्युत सत्येव धर्मिणि धर्ममात्रकृता विप्रतिपत्तिः । इत्यलमप्रस्तुतेन भूयसा सहृदयजनोद्वेजनेन । बुधस्यैकस्य प्रामादिकमपि तथाभिधानं स्यात्, न तु भूयसां तद्युक्तम् । तेन बुधैरिति बहुवचनम् । एतदेव[11] व्याचष्टे—**परम्परयेति** । अविच्छिन्नेन प्रवाहेण तैरे[12]तदुक्तम् । विनापि विशिष्टपुस्तकेषु[13] विवेचनादित्यभिप्रायः । न च बुधा भूयांसोऽनादरणीयं वस्त्वादरेणोपदिशेयुः । एतत्त्वादरेणोपदिष्टम् । तदाह—सम्यग्य[14] आम्नातपूर्व इति । पूर्वग्रहणेनेदंप्रथमता[15] नात्र संभाव्यत इत्याह । व्याचष्टे[16] च—समाख्यातः सम्यगासमन्तात्ख्यातः प्रकटित इत्यनेन । **तस्येति** । यस्याधिगमाय प्रत्युत यतनीयं का तत्रासंभावना[17] । अतः किं कुर्मः । अपारं मौर्ख्यमभाववादिनामिति भावः । न चास्माभिरभाववादिनां विकल्पाः श्रुताः[18] । किं तु संभाव्य दूषयिष्यन्ते । अतः परोक्षत्वम् । न च भविष्यद्वस्तु दूषयितुं शक्यम् । अनुत्पन्नत्वादेव । तदपि बुद्ध्यारोपितं दूष्यत[19] इति

१. 'अविषयं' ग. २. 'येन' ग.

१. 'बोधनिमित्त इत्यभि' ग. २. 'तत्तदर्थस्य' ग. ३. 'निश्चयायोगात्' ग. ४. 'त्वस्यैव' ख, 'त्वन्यच' ग. ५. 'आमनेयुः कथयेरन्' क-ख, 'त्वतादृशमामिनेयुरित्यभिप्रायेण' ग. ६. 'युक्तत्वम्' ग. ७. 'ध्वनिलक्षणार्थकः' ग. ८. 'पदार्थकत्वे' ग. ९. 'संज्ञको' ग. १०. 'हि' क-ख-पुस्तकयोर्नास्ति. ११. 'तदेव व्याचष्टे' ग. १२. 'कैः' ग. १३. 'पुस्तकविनिवेशनात्' ग. १४. 'सम्यगाम्नातपूर्वः' ग. १५. 'प्रथमांता' ख. १६. 'व्याचष्टे च सम्यगाम्नातः प्रकटीकृतः' ग. १७. 'तत्राभावसंभावना' ग. १८. 'कृताः' क-ख. १९. 'दूषयिष्यते' ग.

मन्ये जगदुः। तदभाववादिनां चामी विकल्पाः संभवन्ति। तत्र[1] केचि-

चेत्, बुद्ध्यारोपितत्वादेव भविष्यत्वहानिः। अतो भूतकालोन्मेषात्परोक्षाद्विशिष्टायतनत्वप्रतिभानाभावाच्च लिटा प्रयोगः कृतः—**जगदुरिति**। तद्व्याख्यानायैव संभाव्यदूषणं प्रकटयिष्यति। संभावनापि नेयमसंभवतो युक्ता, अपि तु संभवत एव। अन्यथा संभावनानामपर्यवसानं स्यात्, दूषणानां च। अतः संभावनानामभिधायिष्यमाणानां समर्थयितुं पूर्वं संभवन्तीत्याह। संभाव्यन्त इति तूच्यमानं पुनरुक्तार्थमेव स्यात्। न च संभवस्य संभावना। अपि तु सा वर्तमानतैव स्फुटेति वर्तमानेनैव निर्देशः। नन्वसंभवद्वस्तुमूलया संभावनया यत्संभावितं तद्दूषयितुमशक्यमित्याशङ्क्याह—**विकल्पा इति**। न तु वस्तु संभवति तादृक् यत इयं संभावना। अपि तु विकल्पा एव। ते च तत्वावबोधवन्ध्यतया स्फुरेयुरपि। अत एव 'आचक्षीरन्' इत्यादयोऽत्र संभावनाविषया लिङ्प्रयोगा अतीतपरमार्था एव पर्यवस्यन्ति। यथा—'यदि नामास्य कायस्य यदन्तस्तद्बहिर्भवेत्। दण्डमादाय लोकोऽयं शुनः काकांश्च वारयेत्॥' इत्यत्रार्थाद्यथैवं कायस्य दृष्टता स्यात्तदैवमवलोक्येतेति भूतप्राणतैव। यदि न स्यात्ततः किं स्यादित्येनेनापि किं वृत्तम्, यदि न पूर्वं भवनस्य संभावनेत्ययमेवार्थः। इत्यलमप्रकृतेन बहुना। तत्र समयापेक्षणेन शब्दोऽर्थप्रतिपादक इति कृत्वा वाच्यव्यतिरिक्तं नास्ति व्यङ्ग्यम्। सदपि वा तदभिधाक्षिप्तं शब्दावगतार्थबलाकृष्टत्वाद्ग्राह्यम्। तदनाक्षिप्तमपि वा न वक्तुं शक्यम्, कुमारीष्विव भर्तृसुखमतद्वित्सु। अतस्त्रय एवैते प्रधानविप्रतिपत्तिप्रकाराः। तत्राभावविकल्पस्य त्रयः प्रकाराः। शब्दार्थगुणालंकाराणामेव शब्दार्थशोभाकारित्वाल्लोकशास्त्रातिरिक्तसुन्दरशब्दार्थमयस्य काव्यस्यानन्यशोभाहेतुः कश्चिदन्योऽस्ति योऽस्माभिर्न गणित इत्येकः प्रकारः। यो वा न गणितः स शोभाकार्येव न भवतीति द्वितीयः। अथ शोभाकारी भवति तर्ह्यस्मदुक्त एव गुणे वालंकारे वान्तर्भवति। नामान्तरकरणे तु कियदिदं पाण्डित्यम्। अथापि गुणेष्वलंकारेषु वान्तर्भावः, तथापि किंचिद्विशेषलेशमाश्रित्य नामान्तरमात्रम्। उपमा-

१. 'तत्र' क-ख-पुस्तकयोर्नास्ति.

१. 'प्रतिभानात्' ख. २. 'च' क-ख-पुस्तकयोर्नास्ति. ३. 'संभवतीत्याह' ग. ४. 'संभवन्तीति। संभाव्यन्त इति' क-ख. ५. 'संभावस्यापि' ख. ६. 'ननु च' ग. ७. 'न वस्तुसंभावना तादृक्क्रियत इयं' ग. ८. 'विकल्प एव' क-ख. ९. 'अर्थात्' ग-पुस्तके नास्ति. १०. 'तदेवं' क-ख. ११. 'इत्यत्रापि किं वृत्तं यदि पूर्ववन्न भवनसंभावनेत्ययमेवार्थः' ग. १२. 'अभिधावृत्त्या' ग. १३. 'शब्दानुगतार्थं' ख. १४. 'शक्यते' ख. १५. 'इति' ग. १६. 'प्रधानानि' ग. १७. 'काव्यस्य न शोभा' ग. १८. 'द्वितीयः प्रकारः' ग. १९. 'वा नान्तर्भावः' ग. २०. 'अविशेष' ग. २१. 'नामान्तरकरणम्' ग.



दाचक्षीरन्—शब्दार्थशरीरं तावत्काव्यम्। तस्य शब्दगताश्चारुत्वहेतवोऽनुप्रासादयः प्रसिद्धा एव। अर्थगताश्चोपमादयः। वर्णसंघटनाधर्माश्च ये माधुर्यादयस्तेऽपि प्रतीयन्ते। तदनतिरिक्तवृत्तयोऽपि याः कैश्चिदुप-

विच्छित्तिप्रकाराणामसंख्यत्वात्। तथापि गुणालंकारव्यतिरिक्तत्वाभाव एव। तावन्मात्रेण च किं कृतम्। अन्यस्यापि वैचित्र्यस्य शक्योत्प्रेक्ष्यत्वात्। चिरंतनैर्हि भरतमुनिप्रभृतिभिर्यमकोपमे शब्दार्थालंकारत्वेनेष्टे। तत्प्रपञ्चदिक्प्रदर्शनं त्वन्यैरलंकारकारैः कृतम्। तत्र यथा 'कर्मण्यण्' इत्यत्र कुम्भकाराद्युदाहरणं श्रुत्वा स्वयं नगरकारादिशब्दा उत्प्रेक्ष्यन्ते। तावता क आत्मनि बहुमानः। एवं प्रकृतेऽपीति तृतीयः प्रकारः। एवमेकस्त्रिधाविकल्पः। अन्यौ च द्वौ। इति पञ्च विकल्पा इति तात्पर्यार्थः। तानेव क्रमेणाह—**शब्दार्थशरीरं तावदित्यादिना**। तावद्ग्रहणेन कस्याप्यत्र न विप्रतिपत्तिरिति दर्शयति। तत्र शब्दार्थौ न तावद्ध्वनिः। संज्ञामात्रे हि को गुणः। अथ शब्दार्थयोश्चारुत्वं स ध्वनिः। तथापि द्विविधं चारुत्वम्—स्वरूपमात्रनिष्ठम्, संघटनाश्रितं च। तत्र शब्दानां स्वरूपमात्रकृतं चारुत्वं शब्दालंकारेभ्यः। संघटनाश्रितं तु शब्दगुणेभ्यः। एवमर्थानां चारुत्वं स्वरूपमात्रनिष्ठमुपमादिभ्यः। संघटनापर्यवसितं त्वर्थगुणेभ्य इति न गुणालंकारव्यतिरिक्तो ध्वनिः कश्चित्। **संघटनाधर्मा इति**। शब्दार्थयोरिति शेषः। यद्गुणालंकारव्यतिरिक्तं तच्चारुत्वकारि न भवति। नित्यानित्यदोषा असाधुदुःश्रवादय इव। चारुत्वहेतुश्च ध्वनिः। तन्न तद्व्यतिरिक्त इति व्यतिरेकी। ननु वृत्तयो रीतयश्च यथा गुणालंकारव्यतिरिक्ताश्चारुत्वहेतवश्च तथा ध्वनिरपि तद्व्यतिरिक्तश्च चारुत्वहेतुश्च भविष्यतीत्यसिद्धो व्यतिरेक इत्यनेनाभिप्रायेणाह—**तदनतिरिक्तवृत्तय इति**। नैव वृत्तिरीतीनां तद्व्यतिरिक्तत्वं सिद्धम्। तथा ह्यनुप्रासानामेव दीप्तमसृणमध्यमवर्णनीयोपयोगितया परुषत्वललितत्वमध्यमत्वस्वरूपविवेचनाय वर्गत्रयसंपादनार्थं तिस्रोऽनुप्रासजातयो वृत्तय इत्युक्ताः। वर्तन्तेऽनुप्रासभेदा आस्विति। यदाह—'सरूपव्यञ्जनन्यासं तिसृष्वेतासु वृत्तिषु। पृथक्पृथगनुप्रासमुशन्ति' इति। पृथक्पृथ-

१. 'काश्चित्' ग.

१. 'एव' ग-पुस्तके नास्ति. २. 'कृतम्' ग. ३. 'उत्प्रेक्षितत्वात्' ग. ४. 'एव शब्दार्थालंकृतित्वेनोक्ते' ग. ५. 'तानेव च' ग. ६. 'न' ग-पुस्तके नास्ति. ७. 'तत्र' ग-पुस्तके नास्ति. ८. 'अतः' क-ख. ९. 'मात्र' क-ख-पुस्तकयोर्नास्ति. १०. 'दुःश्रवा इव' ख. ११. 'व्यतिरेकिहेतुः' ग. १२. 'अनेन' ग-पुस्तके नास्ति. १३. 'ह्यनुप्रासादीनां' क-ख. १४. 'मध्य' ग. १५. 'स्वरूपव्यञ्जनान्यासान्' ग. १६. 'कवयस्तथेति' ग.

नागरिकाद्याः प्रकाशिताः, ता अपि गताः श्रवणगोचरम् । रीतयश्च वैदर्भीप्रभृतयः । तद्व्यतिरिक्तः कोऽयं ध्वनिर्नामेति ।

अन्ये ब्रूयुः—नास्त्येव ध्वनिः । प्रसिद्धप्रस्थानव्यतिरेकिणः काव्य-

---

गिति । [1]परुषानुप्रासः । उपनागरिकानुप्रासः । उपनागरिका ललिता । नागरिकया विदग्धया उपमितेति कृत्वा । मध्यमं कोमलम् । अपरुषमित्यर्थः । अत एव वैदग्ध्यविहीनस्वभावा सुकुमारा अपरुषा ग्राम्यवनितासादृश्यादियं [2]वृत्तिर्ग्राम्येति च तृतीयः कोमलानुप्रास इति वृत्तयोऽनुप्रासजातय एव । न चेह वैशेषिकवद्वृत्तिर्विवक्षिता । येन जातौ [3]जातिमतो वर्तमानत्वं न स्यात् । तदनुग्रह एव हि तत्र वर्तमानत्वम् । यथाह कश्चित्—'लोकोत्तरे हि गाम्भीर्ये वर्तन्ते पृथिवीभुजः' इति । तस्माद्वृत्तयो[4]ऽनुप्रासेभ्योऽनतिरिक्तवृत्तयो नाभ्यधिकव्यापाराः । अत एव व्यापारभेदाभावान्न पृथ[5]गनुमेयस्वरूपा अपीति वृत्तिशब्दस्य व्यापारवाचिनोऽभिप्रायः । अनतिरिक्तत्वादेव वृत्तिव्यवहारो भामहादिभिर्न कृतः । उद्भटादिभिः प्रयुक्तेऽपि तस्मिन्नार्थः कश्चिदधिको हृदयपथमवतीर्ण इत्यभिप्रायेणाह—**गताः श्रवणगोचरमिति । रीतयश्चेति** । तदनतिरिक्तवृत्तयोऽपि गताः श्रवणगोचरमिति संबन्धः । **[6]तद्व्यतिरिक्त इति** । तच्छब्देनात्र माधुर्यादयो गुणाः । तेषां च समुचितचित्तवृत्त्यर्पणे यदन्योन्यमेलनक्षमत्वेन पानक इव गुडमरिचादिरसानां संघातरूपता[7]गमनं दीप्तललितमध्यमवर्णनीयविषयं गौडीय[8]वैदर्भपाञ्चालदेशहेवाकप्राचुर्यदृशा तदेव त्रिविधं रीतिरित्युक्तम् । जातिर्जातिमतो नान्या समुदायश्च [9]समुदायिभ्यो नान्य इति वृत्तिरीतयो न गुणालंकारव्यतिरिक्ता इति स्थित एवासौ व्यतिरेकी हेतुः । तदाह—**कोऽयं ध्वनिरिति** । नैष चारुत्वस्थानम् । शब्दार्थ[10]स्वरूपत्वाभावात् । नापि चारुत्वहेतुः । गुणालंकारव्यतिरिक्तत्वात् । तेनाखण्डबुद्धिसमास्वाद्यमपि काव्यमपोद्धारबुद्ध्या [11]यदि विभज्यते तत्रा(था)प्यत्र ध्वनिशब्दवाच्यो न कश्चिदतिरिक्तो[12]ऽर्थो लभ्यत इति नामशब्देनाह । ननु मा भूदसौ शब्दार्थस्वभावः, मा च भूच्चारुत्वहेतुः, [13]येन गुणालंकारव्यतिरिक्तोऽसौ न स्यादित्याशङ्क्य द्वितीयमभाववादप्रकारमाह—**अन्य इति** । भवत्वेवम्, तथापि नास्त्येव ध्वनिर्यादृशस्तव [14]लिलक्षयिषतः काव्यस्य ह्यसौ कश्चिद्वक्तव्यः । न चासौ गीतनृत्त[15]हास्यादिस्था-

---

१. 'परुषानुप्रासः । परुषा दीप्ता । मसृणानुप्रासः । उपनागरिका कया विदग्धया' ग. २. 'वृत्तिर्ग्राम्या कोमला च । तृतीयः कोमलपरुषानुप्रास इति' ग. ३. 'जातिमतिवर्तनं' ग, 'वर्तमानं' ख. ४. 'नुप्रासादिभ्यो' क-ख. ५. 'अभिधेय' ग. ६. 'तद्व्यतिरिक्त इति' ग-पुस्तके नास्ति. ७. 'गमनं च दीप्त' ख, 'गमनदीप्त' ग. ८. 'वैदर्भीपाञ्चालीदेशपाकप्राचुर्यं' ग. ९. 'समुदायिनो' ग. १०. 'स्वरूपाभावात्' ग. ११. 'यदि' ख-पुस्तके नास्ति. १२. 'अर्थो' ग-पुस्तके नास्ति. १३. 'तेन गुणालंकारव्यतिरिक्तेन सौस्थ्यादित्या' ग. १४. 'लिलक्षयिषितः' ग. १५. 'वाद्यादिस्थानीयः' ग.



प्रकारस्य काव्यत्वहानेः । सहृदयहृदयाह्लादिशब्दार्थमयत्वमेव काव्यलक्षणम् । न चोक्तप्रस्था[1]नातिरेकिणो मार्गस्य तत्संभवति । न च तत्समयान्तःपातिनः सहृदयान्कांश्चित्[2]परिकल्पिततत्प्रसिद्ध्या ध्वनौ काव्यव्यपदेशः प्रवर्तितोऽपि सकलविद्वन्मनोग्राहिता[3]मवलम्बते ।

---

नीयः [1]काव्यस्य कश्चित् । कवनीयं काव्यम् । तस्य भावः काव्यत्वम् । न च [2]नृत्तगीतादि कवनीयमित्युच्यते । **[3]प्रसिद्धेति** । प्रसिद्धं प्रस्थानं शब्दार्थौ तद्गुणालंकाराश्चेति । प्रतिष्ठन्ते परम्परया विहरन्ति येन मार्गेण तत्प्रस्थानम् । **काव्यप्रकारस्येति** । काव्यप्रकारत्वेन तव स मार्गोऽभिप्रेतः । 'काव्यस्यात्मा' इत्युक्तत्वात् । ननु कस्मात्तत्काव्यं न भवतीत्याह—**सहृदयेति । मार्गस्येति** । [4]नृत्तगीताद्यक्षिनिकोचनादिप्रायस्येत्यर्थः । **[5]तदिति** । सहृदयेत्यादिकाव्यलक्षणमित्यर्थः । ननु ये तादृशमपूर्वं काव्यरूपतया जानन्ति त एव सहृदयाः । तदभिमतत्वं च नाम काव्यलक्षणमुक्तप्रस्थानातिरेकिण एव भविष्यतीत्याशङ्क्याह—**न चेति** । यथा [6]हि खड्गलक्षणं करोमीत्युक्त्वा आतानवितानात्मा [7]प्राव्रियमाणः सकलदेहाच्छादकः सुकुमारश्चित्रतन्तुवि[8]र्चितः संवर्तनविवर्तनसहिष्णुरच्छेदकः [9]सुच्छेद्य उत्कृष्टः खड्ग इति ब्रुवाणः परैः पटः खल्वेवंविधो भवति न खड्ग इत्ययुक्ततया पर्यनुयुज्यमान एवं ब्रूयात्—ईदृश एव खड्गो ममाभिमत इति तादृगेवैतत् । प्रसिद्धं हि लक्ष्यं भवति । [10]न [11]कल्पितमिति भावः । तदाह—**सकलविद्वदिति** । विद्वांसो[12]ऽपि [13]हि तत्समयज्ञा [14]एव भविष्यन्तीति शङ्कां सकलशब्देन निराकरोति । एवं हि कृतेऽपि न [15]किंचित्कृतम् । तस्मादुन्मत्तता परं प्रकटितेति भावः । यस्त्वत्राभिप्रायं व्याचष्टे—जीवितभूतो ध्वनिस्ताव[16]त्तवाभिमतः । जीवितं च नाम प्रसिद्धप्रस्थानातिरिक्तम् । अलंकारकारैरनुक्तत्वात्तच्च न काव्यमिति लोके प्रसिद्धमिति । तस्येदं सर्वं स्ववचनविरुद्धम् । यदि हि तत्काव्यस्यानुप्राणकं तेनाङ्गीकृतं पूर्वपक्षवादिना तच्चिरंतनैरनुक्तमिति प्रत्युत [17]लक्षणानर्हमेव भवति । तस्मात्प्राक्तन ए[18]वात्राभिप्रायः । ननु भवत्वसौ चारुत्वहेतुः शब्दार्थगुणालंकारान्तर्भूतश्च, तथापि ध्वनिरित्यमुया भाषया जीवितमित्यसौ न केनचिदुक्त इत्यभिप्रायमाशङ्क्य तृतीयमभाववादमुपन्यस्य-

---

१. 'अतिक्रमिणो' ग. २. 'परिकल्प्य तत्प्र–' ग. ३. 'एव लम्बते' ग.

---

१. 'काव्यस्य च' क-ख. २. 'नृत्तादि' ग. ३. 'प्रसिद्ध्येति' क. ४. 'नृत्तगीतादिकामिनीकोपादिप्राय' ग. ५. 'तामिति' ग. ६. 'हि' क-ख-पुस्तकयोर्नास्ति. ७. 'प्रापयमाणः' ग. ८. 'चितः' ग. ९. 'स्वच्छः' ख-ग. १०. 'न' ग-पुस्तके नास्ति. ११. 'विकल्पितं' क. १२. 'अपि' ख-पुस्तके नास्ति. १३. 'हि' ग-पुस्तके नास्ति. १४. 'एव' क-ख-पुस्तकयोर्नास्ति. १५. 'किंचित्कृतं स्यात्' क, 'काश्चित्कृतः स्यात्' ग. १६. 'तथाभिमतः' क-ख. १७. 'लक्षणार्हं' ग. १८. 'अत्र' ग-पुस्तके नास्ति.

पुनरपरे तस्याभावमन्यथा कथयेयुः—न संभवत्येव ध्वनिर्नामापूर्वः कश्चित्। कामनीयकमनतिवर्तमानस्य तस्योक्तेष्वेव चारुत्वहेतुष्वन्तर्भावात्। तेषामन्यतमस्यैव वा पूर्वसमाख्यामात्रप्रकरणे यत्किंचन कथनं[1] स्यात्। किं च वाग्विकल्पानामानन्त्यात्संभवत्यपि वा कस्मिंश्चित्काव्यलक्षणविधायिभिः प्रसिद्धैरप्रदर्शिते प्रकारलेशे ध्वनिर्ध्वनिरिति तदलीकसहृदयत्वभावनामुकुलितलोचनैर्नृत्यते। तत्र हेतुं न विद्मः। सहस्रशो हि[2] महात्मभिरन्यैरलंकारप्रकाराः प्रकाशिताः प्रकाश्यन्ते च। न च तेषामेषा दशा श्रूयते। तस्मात्प्रवादमात्रं ध्वनिः। न त्वस्य क्षोदक्षमं[3] तत्त्वं किंचिदपि[4] प्रकाशयितुं शक्यम्। तथा चान्येन कृत एवात्र श्लोकः—

---

ति—**पुनरपर इति**। कामनीयकमिति कमनीयस्य कर्म। चारुत्वहेतुेति यावत्। ननु विच्छित्तीनामसंख्येयत्वान्न काचित्तादृशी विच्छित्तिरस्माभिर्दृष्टा या नानुप्रासादौ नापि माधुर्यादावुक्तलक्षणेऽन्तर्भवेदित्याशङ्क्याभ्युपगमपूर्वकं परिहरति—**वाग्विकल्पानामिति**। वक्तीति वाक् शब्दः। उच्यत इति वागर्थः। उच्यतेऽनयेति वागभिधाव्यापारः। तत्र शब्दार्थवैचित्र्यप्रकारोऽनन्तः। अभिधावैचित्र्यप्रकारोऽप्यसंख्येयः। **प्रकारलेश इति**। स हि चारुत्वहेतुर्गुणो वालंकारो वा स च सामान्यलक्षणेन संगृहीत एव। यदाहुः—'काव्यशोभायाः कर्तारो धर्मा गुणाः, तदतिशयहेतवस्त्वलंकाराः' इति। ध्वनिर्ध्वनिरिति वीप्सायां संभ्रमं सूचयन्नादरं दर्शयति। **नृत्यत इति**। तल्लक्षणकृद्भिस्तद्युक्तकाव्यविधायिभिस्तच्छ्रवणोद्भूतचमत्कारैश्च प्रतिपत्तृभिरिति शेषः। ध्वनिशब्दे कोऽत्यादर इति भावः। **एषा दशेति**। स्वयं दर्पः परैश्च स्तूयमानतेत्यर्थः। वाग्विकल्प इति वाक्प्रवृत्तिहेतुप्रतिभाव्यापारप्रकार इति वा। तस्मात्प्रवादमात्रमिति सर्वेषामभाववादिनां साधारण उपसंहारः। यतः शोभाहेतुत्वे गुणालंकारेभ्यो न व्यतिरिक्तः। यतश्च व्यतिरिक्तत्वे न शोभाहेतुः। यतश्च शोभाहेतुत्वेऽपि नादरास्पदं तस्मादित्यर्थः। न चेयमभावसंभावना निर्मूलैव दूषितेत्याह—**तथा चान्येनेति**। ग्रन्थकृत्समानकालभाविना मनोरथनाम्ना कविना। यतो न सालंकृति अतो न मनःप्रह्लादि।

---

१. 'कथं न' ख, 'कथितं' ग. २. 'अपि' क-ख. ३. 'क्षोदक्षमत्वं' ग. ४. 'अस्ति' क-ख.

---

१. 'यदाह' ग. २. ग-पुस्तके 'इति' इत्यस्मादनन्तरं 'तथा व···भिधेयशब्दोक्तिरिष्टावाचामलंकृतिः। इति' इत्यधिकमस्ति. ३. 'विधातृभिः' क-ख. ४. 'च' क-ख-पुस्तकयोर्नास्ति. ५. 'वाग्विकल्पा इति वाक्प्रतिपत्तिहेतु' ग. ६. 'व्यापारा इति' ग. ७. 'इय संभारः' ग. ८. 'अपि' ग-पुस्तके नास्ति. ९. 'भावितैव' ग.



'यस्मिन्नस्ति न वस्तु किंचन मनःप्रह्लादि सालंकृति[1]
व्युत्पन्नै रचितं च नैव वचनैर्वक्रोक्तिशून्यं च यत्।
काव्यं तद्ध्वनिना समन्वितमिति प्रीत्या प्रशंसञ्जडो
नो विद्मोऽभिदधाति[2] किं सुमतिना पृष्टः स्वरूपं ध्वनेः॥'

भाक्तमाहुस्तमन्ये। अन्ये तं ध्वनिसंज्ञितं काव्यात्मानं गुणवृत्तिरि-

---

अनेनार्थालंकाराणामभाव उक्तः। व्युत्पन्नै रचितं च नैव वचनैरिति शब्दालंकाराणाम्। वक्रोक्तिरुत्कृष्टा संघटना। तच्छून्यमिति शब्दार्थगुणानाम्। वक्रोक्तिशून्यशब्देन सामान्यलक्षणाभावेन सर्वालंकाराभाव उक्त इति केचित्। तैः पुनरुक्तं न परिहृतमित्यलम्। **प्रीत्येति**। गतानुगतिकानुरागेणेत्यर्थः। **सुमतिनेति**। जडेन पृष्टो भ्रूभङ्गकटाक्षादिभिरेवोत्तरं ददत्तत्स्वरूपं काममाचक्षीतेति भावः। एवमेतेऽभावविकल्पाः शृङ्खलाक्रमेणागताः। न त्वन्योन्यमसंबद्धा एव। तथा हि तृतीयाभावप्रकारनिरूपणोपक्रमे पुनःशब्दस्यायमेवाभिप्राय उपसंहारैक्येन संगच्छते। अभाववादस्य संभावनाप्राणत्वेन भूतत्वमुक्तम्। भाक्तवादस्त्वविच्छिन्नः पुस्तकेष्वित्यभिप्रायेण भाक्तमाहुरिति नित्यप्रवृत्तवर्तमानापेक्षयाभिधानम्। भज्यते सेव्यते पदार्थेन प्रसिद्धतयोत्प्रेक्ष्यत इति भक्तिर्धर्मोऽभिधेयेन सारूप्यादिः। तत आगतो भाक्तो लाक्षणिकोऽर्थः। यदाहुः—'अभिधेयेन सारूप्यात्सामीप्यात्समवायतः। वैपरीत्यात्क्रियायोगाल्लक्षणा पञ्चधा मता॥' इति। गुणसमुदायवृत्तेः शब्दस्यार्थभागस्तैक्ष्ण्यादिर्भक्तिः। तत आगतो गौणोऽर्थो भाक्तः। भक्तिः प्रतिपाद्ये सामीप्यतैक्ष्ण्यादौ श्रद्धातिशयः। तां प्रयोजनत्वेनोद्दिश्य तत आगतो भाक्त इति गौणो लाक्षणिकश्च। मुख्यस्य वार्थस्य भङ्गो भक्तिरित्येवं मुख्यार्थबाधनिमित्तप्रयोजनमिति त्रयसद्भाव उपचारबीजमित्युक्तं भवति। **काव्यात्मानं गुणवृत्तिरिति**। सामानाधिकरण्यस्यायं भावः—यद्यप्यविवक्षितवाच्ये ध्वनिभेदे 'निःश्वासान्ध इवादर्शः' इत्यादावुपचारोऽस्ति, तथापि न तदात्मैव ध्वनिः। तद्व्यतिरेकेणापि भावात्। विवक्षितान्यपरवाच्यप्रभेदादावविवक्षिते वाच्येऽप्युपचार एव, न ध्वनिरिति वक्ष्यामः। तथा च वक्ष्यति—'भक्त्या बिभर्ति नैकत्वं रूपभेदादयं ध्वनिः। अतिव्याप्तेरथाव्याप्तेर्न चासौ लक्ष्यते तया॥' [इति], 'कस्यचिद्ध्वनिभेदस्य सा तु स्यादुपलक्षणम्।' इति च। गुणाः सामीप्यादयः। धर्मास्तैक्ष्ण्यादयश्च। तैरुपा-

---

१. 'मालंकृति' ख, 'सोलंकृति' ग. २. 'अभिदधातु' ग.

---

१. 'यन्न' ग. २. 'शून्य' क-ख-पुस्तकयोर्नास्ति. ३. 'परिहृतमेवेत्यलम्' ग. ४. 'कटाक्षैरेव' ग. ५. 'उपसंहारैक्यं च संगच्छते' ग. ६. 'विभाक्तं' ग. ७. 'संभाव्यते पदार्थेन' क-ख. ८. 'सादृश्यात्' क-ख. ९. 'प्रभेदात्' ख. १०. 'त्वया' ख. ११. 'साम्यादयः' ख.

त्याहुः । यद्यपि च ध्वनिशब्दसंकीर्तनेन काव्यलक्षणविधायिभिर्गुणवृत्तिरन्यो वा न कश्चित्प्रकारः प्रकाशितः, तथापि गुणवृत्त्या काव्येषु व्यवहारं दर्शयता ध्वनिमार्गो मनाक्स्पृष्टो लक्ष्यत इति परिकल्प्यैवमुक्तम्—'भाक्तमाहुस्तमन्ये' इति ।

केचित्पुनर्लक्षणकरणशालीनबुद्धयो ध्वनेस्तत्त्वं गिरामगोचरं सहृदयहृदयसंवेद्यमेव समाख्यातवन्तः । तेनैवंविधासु विमतिषु स्थितासु सहृ-

---

यैर्वृत्तिरर्थान्तरे यस्य, तैरुपायैर्वृत्तिर्वा शब्दस्य यत्र स गुणवृत्तिः शब्दोऽर्थो वा । गुणद्वारेण वा वर्तनं गुणवृत्तिरमुख्योऽभिधाव्यापारः । एतदुक्तं भवति--ध्वनतीति वा, ध्वन्यत इति वा, ध्वननमिति वा यदि ध्वनिस्तथाप्युपचरितशब्दार्थव्यापारातिरिक्तो नासौ कश्चित् । मुख्यार्थे ह्यभिधैवेति पारिशेष्यादमुख्य एव ध्वनिः । तृतीयराश्यभावात् । ननु केनैतदुक्तं ध्वनिर्गुणवृत्तिरित्याशङ्क्याह—**यद्यपि चेति । अन्यो वेति ।** गुणालंकारप्रकार इति यावत् । **दर्शयतेति ।** भट्टोद्भटवामनादिना । भामहोक्तं 'शब्दश्छन्दोभिधानार्थः' इत्यभिधानस्य शब्दाद्भेदं व्याख्यातुं भट्टोद्भटो बभाषे--'शब्दानामभिधानमभिधाव्यापारो मुख्यो गुणवृत्तिश्च' इति । वामनोऽपि 'सा सादृश्याल्लक्षणा वक्रोक्तिः' इति । **मनाक्स्पृष्ट इति ।** तैस्तावद्ध्वनिदिगुन्मीलिता । यथालिखितप्रतिपादकैस्तु स्वरूपविवेकं कर्तुमशक्नुवद्भिस्तत्स्वरूपविवेकोद्यतः प्रत्युतोपालभ्यते । अभग्ननारिकेलकल्पयथाश्रुतग्रन्थनोद्ग्रन्थनमात्रेणेति । अत एवाह—**परिकल्प्यैवमुक्तमिति ।** यद्येवं न योक्ष्यते तदा ध्वनिमार्गः स्पृष्ट इति पूर्वपक्षेऽभिधानं विरुध्यते । **शालीनबुद्धय इति ।** अप्रगल्भमतय इत्यर्थः । एते च त्रय उत्तरोत्तरं भव्यबुद्धयः । प्राच्या हि विपर्यस्ता एव सर्वथा । मध्यमास्तु तद्रूपं जानाना अपि संदेहेनापह्नुवते । अन्त्यास्त्वनपह्नुवाना अपि लक्षयितुं न जानत इति क्रमेण विपर्याससंदेहाज्ञानप्राधान्यमेतेषाम् । **तेनेति ।** एकैकोऽप्ययं विप्रतिपत्तिरूपो वाक्यार्थो निरूपणे हेतुत्वं प्रतिपद्यत इत्येकवचनम् । एवंविधासु विमतिष्विति निर्धारणे सप्तमी । आसु मध्ये एकोऽपि

---

१. 'स्पृष्टोऽपि न' ख.

---

१. 'स्मृतिः' ग. २. 'तैरुपायैर्वा शब्दस्य यत्र गुणवृत्तः' ग. ३. 'वर्तमानं' क-ख. ४. 'मुख्योर्थेप्यभिधैव' ग. ५. 'भामहेनोक्तं' ग. ६. 'शब्दाश्छन्दोभिधानार्थाः' ग, 'शब्दश्छन्दोभिधानार्थं' ख. ७. 'सादृश्यात्' ग-पुस्तके नास्ति. ८. 'पाङ्कैस्तु' ग. ९. 'विवेकोद्योतः' ख, 'विवेको न कृतः' ग. १०. 'तद्ग्रन्थोद्ग्रहण' ग. ११. 'योक्ष्यते मनाग्ध्वनि' ग. १२. 'पक्षविधानं' ग. १३. 'निह्नुवते' ग. १४. 'निह्नुवाना' ग. १५. 'निरूपणेऽपि' ग. १६. 'एकोऽपि' ग-पुस्तके नास्ति.



दयमनःप्रीतये तत्स्वरूपं ब्रूमः । तस्य हि ध्वनेः स्वरूपं सकलसत्कविकाव्योपनिषद्भूतमतिरमणीयमणीयसीभिश्चिरंतनकाव्यलक्षणविधायिनां बुद्धिभिरनुन्मीलितपूर्वम् । अथ च रामायणमहाभारतप्रभृतिनि लक्ष्ये सर्वत्र प्रसिद्धव्यवहारं लक्षयतां सहृदयानामानन्दो मनसि लभतां प्रतिष्ठामिति प्रकाश्यते ।

---

यो विमतिप्रकारस्तेनैव हेतुना तत्स्वरूपं ब्रूम इति ध्वनिस्वरूपमभिधेयम् । अभिधानाभिधेयलक्षणयोर्ध्वनिशास्त्रयोर्वक्तृश्रोत्रोर्व्युत्पाद्यव्युत्पादकभावः संबन्धः । विमतिनिवृत्त्या तत्स्वरूपज्ञानं प्रयोजनम् । शास्त्रप्रयोजनयोः साध्यसाधनभावः संबन्ध इत्युक्तम् । अथ त्रितयप्रयोजनप्रतिपादकं 'सहृदयमनःप्रीतये' इति भागं व्याख्यातुमाह—**तस्य हीति ।** विमतिपदपतितस्येत्यर्थः । ध्वनेः स्वरूपं लक्षयतां संबन्धिनि मनसि आनन्दो निर्वृत्यात्मा चमत्कारापरपर्यायः प्रतिष्ठां परैर्विपर्यासाद्युपहतैरनुन्मील्यमानत्वेन स्थेमानं लभतामिति प्रयोजनं संपादयितुं तत्स्वरूपं प्रकाश्यत इति संगतिः । प्रयोजनं च नाम तत्संपादकवस्तुप्रयोक्तृताप्राणतयैव तथाभवतीत्याशयेन प्रीतये तत्स्वरूपं ब्रूम इत्येकवाक्यतया व्याख्यातं तत्स्वरूपशब्दं व्याचक्षाणः संक्षेपेण तावत्पूर्वोदीरितविकल्पपञ्चकोद्धरणं प्रथयति—**सकलेत्यादिना ।** सकलशब्देन सत्कविशब्देन च प्रकारलेशे कस्मिंश्चिदिति निराकरोति । अतिरमणीयमिति भाक्ताद्व्यतिरिक्तमाह । नहि 'सिंहो बटुः' 'गङ्गायां घोषः' इत्यत्र रम्यता काचित् । उपनिषद्भूतशब्देन तु अपूर्वसमाख्यामात्रकरण इत्यादि निराकृतम् । अणीयसीभिरित्यादिना गुणालंकारानन्तर्भूतत्वं सूचयति । अथ चेत्यादिना तत्समयान्तःपातिन इत्यादिना यत्सामयिकत्वं शङ्कितं तन्निरवकाशीकरोति । रामायणमहाभारतशब्देनादिकवेः प्रभृति सर्वैरेव मुनिभिरस्यादरः [कृतः] इति दर्शयति । लक्षयतामित्यनेन वाचां स्थितमविषय इति परास्यति । लक्ष्यतेऽनेनेति लक्ष्यो लक्षणम् । लक्ष्येण निरूपयन्ति लक्षयन्ति तेषाम् । लक्षणद्वारेण निरूपयतामित्यर्थः । **सहृदयानामिति ।** येषां काव्यानुशीलनाभ्यासवशाद्विशदीभूते मनोमुकुरे वर्णनीयतन्मयीभवनयोग्यता ते हृदयसंवादभाजः सहृदयाः । यथोक्तम्—'योऽर्थो हृदयसंवादी तस्य भावो रसोद्भवः । शरीरं व्याप्यते तेन शुष्कं काष्ठमिवाग्निना ॥' इति । **आनन्द इति ।** रसस्य चर्वणात्मनः प्राधान्यं दर्शयन्रसध्वनेरेव सर्वत्र मुख्यभूतमात्मत्वमिति दर्शयति । तेन यदुक्तम्—'ध्वनिर्नामापरो योऽसौ व्यापारो व्यञ्जनात्मकः । तस्य सिद्धेऽपि भेदे स्यात्काव्याङ्गत्वं न रूपिता ॥' इति तदपहस्तितं भवति । तथा ह्यभि-

---

१. 'अणीयसीभिरपि' ग.

---

१. 'साधकभाव इत्युक्तम्' क-ख. २. 'अतः श्रोतृगतप्रयोजन' ग. ३. 'मनसि हृदये' क-ख. ४. 'पञ्चतोद्धरणं' ग. ५. 'व्यतिरेकमाह' ग. ६. 'क्वचित्' ख. ७. 'त एव' ग. ८. 'असिद्धे' ग. ९. 'काव्येंऽशत्वं न रूपतेति । एतेनापहस्तितं' ग.

तत्र पुन[1]र्ध्वनेर्लक्षयितुमारब्धस्य भूमिकां रचयितुमिदमुच्यते—

'अर्थः सहृदयश्लाघ्यः काव्यात्मा यो व्यवस्थितः ।
वाच्यप्रतीयमानाख्यौ तस्य भेदावुभौ स्मृतौ ॥ २ ॥'

धाभावनारसचर्वणात्मकेऽपि त्र्यंशे काव्ये रसचर्वणा तावज्जीवितभूतेति भवतोऽप्यविवादोऽस्ति । यथोक्तं त्वयैव—'काव्ये रसयिता सर्वो न बोद्धा न नियोगभाक्' इति । तद्वस्त्वलंकारध्वन्यभिप्रायेणा[1]ङ्गमात्रत्वमिति सिद्धसाधनम् । रसध्वन्यभिप्रायेण तु स्वा[2]भ्युपगमप्रसिद्धिसंवेदनविरुद्धमिति । तत्र कवेस्तावत्कीर्त्यापि प्रीतिरेव संपाद्या । यदाह—'कीर्तिं स्वर्गफलामाहुः' इ[3]त्यादि । श्रोतॄणां च व्यु[4]त्पत्तिर्यद्यप्यस्ति, यथोक्तम्—'धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च । करोति कीर्तिं प्रीतिं च साधुकाव्यनिषे[5]वणम् ॥' इति तथापि प्रीतिरेव प्रधानम् । अन्यथा प्रभुसंमितेभ्यो वे[6]दादिभ्यो मित्रसंमितेभ्यश्चेतिहासादिभ्यो व्युत्पत्तिहेतुभ्यः कोऽस्य काव्यरूपस्य व्युत्पत्तिहे[7]तोर्जायासंमितत्वलक्षणो विशेष इति प्राधान्येनानन्द एवोक्तः । चतुर्वर्गव्युत्पत्तेरपि चानन्द एव पार्यन्तिकं मुख्यं फलम् । आनन्द इति च ग्रन्थकृतो नाम । तेन स एवानन्दवर्धनाचार्य एतच्छास्त्रद्वारेण सहृदयहृदयेषु प्रतिष्ठां दे[8]वतायतनादिवदनश्वरीं स्थि[9]तिं लभताम् । सिद्धिं गच्छत्विति भावः । यथोक्तम्—'उपेयुषामपि दिवं सन्निबन्धविधायिनाम् । आ[10]स्त एव निरातङ्कं कान्तं काव्यमयं वपुः ॥' इति । त[11]था मनसि प्रतिष्ठामिति एवंविधस्य मनसः । सहृदयचक्रवर्ती खल्वयं ग्रन्थकृदिति भा[12]वः । यथा—'युद्धे प्रतिष्ठा परमार्जुनस्य' इति । स्वनामप्रकटीकरणं श्रोतॄणां प्रवृत्त्यङ्गमेव संभावनाप्र[13]त्ययोत्पादकमुखेनेति ग्रन्थान्ते वक्ष्यामः । एवं ग्रन्थकृतः कवेः श्रोतुश्च मुख्यं प्रयोजनमुक्तम् ।

न[14]नु 'ध्वनिस्वरूपं ब्रूम' इति प्रतिज्ञाय वाच्यप्रतीयमानाख्यौ द्वौ भेदाव[15]र्थस्येति व्याख्याभिधाने का संगतिः कारिकाया इत्याशङ्क्य संगतिं कर्तुमवतरणिकां क[16]रोति—**तत्रेति** । एवंविधेऽभिधेये प्रयोजने च स्थित इत्यर्थः । भूमिरे[17]व भूमिका । यथापूर्वनिर्माणे चिकीर्षिते पूर्वं भूमिरेव विरच्यते तथा ध्वनिस्वरूपे प्रतीयमानाख्ये निरू[18]पयितव्ये निर्विवादसिद्धवाच्याभिधानं भूमिः । तत्पृष्ठेऽधिकप्रतीयमानांशोल्लि[19]ङ्गनात् । वा-

१. 'पुनः' ग-पुस्तके नास्ति.

१. 'अंशमात्रत्वं' ग. २. 'स्वार्थापगम' ग. ३. 'इत्यादौ' क-ख. ४. 'व्युत्पत्तिप्रीती यद्यपि स्तः' ग. ५. 'निबन्धनम्' क-ख. ६. 'वेदादिशास्त्रेभ्यो' क-ख. ७. 'हेतुजाया' ग. ८. 'देवायतनादि' ग. ९. 'स्थितिं लभताम्' क-ख-पुस्तकयोर्नास्ति. १०. 'आस्थयेव' ग. ११. 'यथा' ख. १२. 'यावत्' क-ख. १३. 'प्रत्ययोपादानमुखेन' ग. १४. ग-पुस्तके 'तत्रेति' इत्यादि 'इत्यर्थः' इत्यन्तं प्रथमम्, 'ननु ध्वनिस्वरूपं' इत्यादि 'करोति' इत्यन्तं चानन्तरं वर्तते. १५. 'अस्येति' ग. १६. 'करोति ध्वनेरेवेत्यादिना' ग. १७. 'इव' ग. १८. 'निरूपितव्ये' क-ख. १९. 'आलिङ्गनात्' ग.



काव्यस्य हि ललितोचितसंनिवेशचारुणः शरीरस्येवात्मा साररूपतया स्थितः सहृदयश्लाघ्यो यो[2]ऽर्थस्तस्य वाच्यः प्रतीयमानश्चेति द्वौ भेदौ ।

च्येन समशीर्षिकागणनं तस्याप्यनपह्नवनीयत्वं प्रतिपादयितुम् । स्मृतावित्यनेन यः समाम्नातपूर्व इति द्रढयति । शब्दार्थशरीरं काव्यमिति यदुक्तं तत्र शरीरग्र[1]हणादेव केनचिदात्मना तदनुप्राणकेन भाव्यमेव । तत्र शब्दस्तावच्छरीरभाग एव सं[2]निविशते । सर्वजनसंवेद्यधर्मत्वात्स्थूलकृशादिवत् । अर्थः पुनः सकलजनसंवेद्यो न भवति । न ह्यर्थमात्रेण काव्यव्य[3]पदेशः । लौकिकवैदिकवाक्येषु तदभावात् । तदाह—**सहृदयश्लाघ्य इति** । स एक एवार्थो द्विशाखतया विवेकिभिर्विभागबुद्ध्या[4]भियुज्यते । तथाहि—तुल्येऽर्थरूपत्वे किमिति क[5]स्मैचित्सहृदयः श्लाघते । तद्भवितव्यं केनचिद्विशेषेण । यो[6] विशेषः स प्रतीयमानभागो विवेकिभिर्विशेषहेतुत्वादात्मेति व्यवस्थाप्यते । वाच्यसं[7]कलनाविमोहितहृदयैस्तु तत्पृथग्भावो विप्रतिपद्यते । चार्वाकैरिवात्मपृथग्भा[8]वः । अत एवार्थ इ[10]त्येकतयोपक्रम्य सहृदयश्लाघ्य इति विशेषणद्वारा हेतुमभिधाया[11]पोद्धारणदृशा तस्य द्वौ भेदावंशावित्युक्तम् । न तु द्वावप्यात्मानौ का[12]व्यस्य । काव्यात्मेति कारिकाभा[13]गगतं काव्यशब्दं व्याकर्तुमाह—**काव्यस्य हीति** । ल[14]लितशब्देन गुणालंकारग्र[15]हणमाह । उचितशब्देन रसविषयमेवौचित्यं भवतीति दर्शयन्रसध्वनेर्जीवितत्वं सू[16]चयति । तदभावे हि किमपेक्षयैदमौचित्यं नाम सर्वत्रोद्घोष्यत [17]इति भावः । योऽर्थ [18]इति य[19]तानुवदन्परेणाप्येतत्तावदभ्युपगतमिति दर्शयति—**तस्येत्यादिना** । तदभ्युपगम एव बुद्ध्यंशत्वे सत्युपपद्यत इति दर्शयति । तेन यदुक्तम्—'चा[21]रुत्वहेतुत्वाद्गुणालंकारव्यतिरिक्तो न ध्वनिः' इति तत्र ध्वनेरात्मस्वरूपत्वाद्धेतुरसिद्ध इति दर्शितम् । न[22] ह्यात्मा चारुत्वहेतुर्देहस्येति भवति । अथाप्येवं स्यात्तथापि वाच्ये नानैकान्तिको हेतुः । न ह्यलंकार्य एवालंकारः । गुणी ए[23]व गुणः । त[24]दर्थमपि वाच्यांशोपक्षेपः । अत एव वक्ष्यति—'वाच्यः प्रसिद्धः' इति ।

१. 'स्मृतः' क-ख. २. 'यो' क-ख-पुस्तकयोर्नास्ति.

१. 'निर्वहणादेव' ग. २. 'संनिर्विशते' ख. ३. 'व्यवहारः' ग. ४. 'विभज्यते' ग. ५. 'कस्मैचिदेव सहृदयाः श्लाघन्ते । तत्र भवितव्यं' ग. ६. 'यतो विशेषः' ग. ७. 'संवलना' ग. ८. 'भावे' ग. ९. 'भावे' ग. १०. 'इत्येक' ग-पुस्तके नास्ति. ११. 'अपोद्धारदृशा' ग. १२. 'काव्यस्य' क-ख-पुस्तकयोर्नास्ति. १३. 'भाग' ग-पुस्तके नास्ति. १४. 'मिलित' ग. १५. 'अनुग्रह' ग. १६. 'सूत्रयति' ग. १७. 'इत्येवेति' ग. १८. 'इतीयत्ता' क, 'इतीयता' ख, 'इति यदा' ग. १९. यता यच्छब्देनेत्यर्थः. २०. 'तावत्' ग-पुस्तके नास्ति. २१. 'चारुत्वहेतुत्वाद्धेतुरसिद्ध इति दर्शितम्' क-ख. २२. 'न त्वात्मा' ग. २३. 'वा' ग. २४. 'एतदर्थमपि' ग.

'तत्र वाच्यः प्रसिद्धो यः प्रकारैरुपमादिभिः ।
बहुधा व्याकृतः सोऽन्यैः काव्यलक्ष्मविधायिभिः ॥ ३ ॥'

ततो नेह प्रतन्यते केवलमनूद्यते पुनर्यथोपयोगमिति ।

'प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम् ।
यत्तत्प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु ॥ ४ ॥'

---

**तत्रेति** । द्व्यंशत्वे सत्यपीत्यर्थः । **प्रसिद्ध इति** । वनितावदनोद्यानेन्दूदयादिवल्लौकिक एवेत्यर्थः । उपमादिभिः प्रकारैः स व्याकृतो बहुधेति संगतिः । अन्यैरिति कारिकाभागं काव्येत्यादिना व्याचष्टे । **ततो नेह प्रतन्यत इति** । विशेषप्रतिषेधेन शेषाभ्यनुज्ञेति दर्शयति—**केवलमित्यादिना** । पुनःशब्दो वाच्याद्विशेषद्योतकः ।

**अन्यदेव वस्त्विति** । तद्व्यतिरिक्तं सारभूतं चेत्यर्थः । महाकवीनामिति बहुवचनमशेषविषयाव्यापकत्वमाह । एतदभिधास्यमानप्रतीयमानानुप्राणितकाव्यनिर्माणनिपुणप्रतिभाभाजनत्वेनैव महाकविव्यपदेशो भवतीति भावः । यदेवंविधमस्ति तद्भाति । न ह्यत्यन्तासतो भानमुपपन्नम् । रजताद्यपि नात्यन्तमसद्भाति । अनेन सत्त्वप्रयुक्तं तावद्भानमिति भासनात्मत्वमवगम्यते । तेन यद्भाति तदस्ति तथेत्युक्तं भवति । तेनायं प्रयोगार्थः—प्रसिद्धं वाच्यं धर्मिप्रतीयमानेन व्यतिरिक्तेन तद्वत्तथा भासमानत्वाल्लावण्यापेताङ्गनाङ्गवत् । प्रसिद्धशब्दस्य सर्वप्रतीतत्वमलंकृतत्वं चार्थः । यत्तदिति सर्वनामसमुदायश्चमत्कारसारताप्रकटीकरणार्थमव्यपदेश्यत्वमन्योन्यसंवलनाकृतं चाव्यतिरेकिभ्रमं दृष्टान्तदार्ष्टान्तिकयोर्दर्शयति । एतच्च किमपीत्यादिना व्याचष्टे । लावण्यं हि नामावयवसंस्थानाभिव्यङ्ग्यमवयवव्यतिरिक्तं धर्मान्तरमेव । न चावयवानामेव निर्दोषता वा भूषणयोगो वा लावण्यम् । पृथङ्निर्वर्ण्यमानकाणत्वादिदोषशून्यशरीरावयवयोगिन्यामप्यलंकृतायामपि लावण्यशून्येयमिति, अतथाभूतायामपि कस्यांचिल्लावण्यामृतचन्द्रिकेयमिति सहृदयानां व्यवहारात् । ननु लावण्यं तावद्व्यतिरिक्तं प्रथितम् । प्रतीयमानं किं तदित्येव न जानीमः । दूरे तु व्यतिरिक्तप्रथेति तथाभासमानत्वमसिद्धो हेतुरित्याशङ्क्य स ह्यर्थ इत्या-

---

१. 'भट्टोद्भटप्रभृतिभिस्ततो' ग. २. 'पुनः' सर्वेषु पुस्तकेषु नास्ति. ३. 'आभाति' ग.

---

१. 'वाच्यांशात्' ग. २. 'रिक्तासारभूतं' ग. ३. 'महा' ग-पुस्तके नास्ति. ४. 'विषयव्यापकमाह' क-ख. ५. 'मानं' क-ख. ६. 'यद्येवं' ग. ७. 'भवति' ग. ८. 'भागं' ग. ९. 'भानात्सत्त्वमवगम्यते' ग. १०. 'अतो यद्भाति' ग. ११. 'शब्दप्रतीतत्वं' क-ख. १२. 'व्यतिरेकभ्रमं' क-ख. १३. 'इत्यनेन' ग. १४. 'व्यङ्ग्य इवावयव' ग. १५. 'धर्मान्तरम्' ग. १६. 'इत्येवं जानीमः' ग. १७. 'व्यतिरेक' ग.



प्रतीयमानं पुनरन्यदेव वाच्याद्वस्त्वस्ति वाणीषु महाकवीनाम् । यत्तत्सहृदयहृदयसुप्रसिद्धं प्रसिद्धेभ्योऽलंकृतेभ्यः प्रतीतेभ्यो वावयवेभ्यो व्यतिरिक्तत्वेन प्रकाशते । लावण्यमिवाङ्गनासु । यथा ह्यङ्गनासु लावण्यं पृथङ्निर्वर्ण्यमानं निखिलावयवव्यतिरेकि किमप्यन्यदेव सहृदयलोचनामृतं तत्त्वान्तरं तद्वदेव सोऽर्थः । स ह्यर्थो वाच्यसामर्थ्याक्षिप्तं वस्तुमात्रमलंकारा रसादयश्चेत्यनेकप्रभेदप्रभिन्नो दर्शयिष्यते । सर्वेषु च तेषु प्रकारेषु

---

दिना स्वरूपं तस्याभिधत्ते । सर्वेषु चेत्यादिना च व्यतिरेकप्रथां साधयिष्यति । तत्र प्रतीयमानस्य तावद्द्वौ भेदौ—लौकिकः, काव्यव्यवहारगोचरश्चेति । लौकिको यः शब्दवाच्यतां कदाचिदधिशेते । स च विधिनिषेधाद्यनेकप्रकारो वस्तुशब्देनोच्यते । सोऽपि द्विविधः । यः पूर्वं क्वापि वाक्यालंकारभावमुपमादिरूपतयान्वभूत्, इदानीं त्वनलंकाररूप एवान्यत्रगुणीभावाभावादपूर्वप्रत्यभिज्ञानबलादलंकारध्वनिरिति व्यपदिश्यते । ब्राह्मणश्रमणन्यायेन तद्रूपताभावेन तूपलक्षितं वस्तुमात्रमुच्यते । मात्रग्रहणेन हि रूपान्तरं निराकृतम् । यस्तु स्वप्नेऽपि न स्वशब्दवाच्यो न लौकिकव्यवहारपतितः, किंतु शब्दसमर्प्यमाणहृदयसंवादसुन्दरविभावानुभावसमुदितप्राङ्निविष्टरत्यादिवासनानुरागसुकुमारस्वसंविदानन्दचर्वणव्यापाररसनीयरूपो रसः । स च काव्यव्यापारैकगोचरो रसध्वनिरिति । स च ध्वनिरेवेति स एव मुख्यतयात्मेति । यदूचे भट्टनायकेन—'अंशत्वं न रूपिता' इति तद्वस्त्वलंकारध्वन्योरेव यदि नामोपालम्भः, रसध्वनिस्तु तेनैवात्मतयाङ्गीकृतः । रसचर्वणात्मनस्तृतीयस्यांशस्याभिधाभावनांशद्वयोत्तीर्णत्वेन निर्णयाद्वस्त्वलंकारध्वन्यो रसध्वनिपर्यन्तत्वमेवेति वयमेव वक्ष्यामस्तत्रेत्यास्तां तावद्वाच्यसामर्थ्याक्षिप्तं इति भेदत्रयव्यापकं सामान्यलक्षणम् । यद्यपि हि ध्वननं शब्दस्यैव व्यापारः,

---

१. 'हृदय' क-ख-पुस्तकयोर्नास्ति. २. 'चावयवेभ्यः' ख. ३. 'अपृथक्पृथङ्निर्वर्ण्यमानं' ग.

---

१. 'सर्वेष्वेवेत्यादिना' क. २. 'तत्तु' ग. ३. 'काव्यव्यापार' क-ख. ४. 'इति' क-ख-पुस्तकयोर्नास्ति. ५. 'स्वशब्दवाच्यताः कदाचिदध्यशेते' ग. ६. 'शब्दो वाच्यतां' ख. ७. 'अपि शेते' ख. ८. 'वस्तुभेदेन' क-ख. ९. 'वाक्यार्थोलंकार' क-ख. १०. 'भावात्मपूर्व' क-ख. ११. 'अपदिश्यते' क-ख. १२. 'तद्रूपाभावेन' क-ख. १३. 'समीक्ष्यमाण' ग. १४. 'समुचितप्राग्विनिविष्ट' ग. १५. 'सुसंविदा' क-ख. १६. 'चर्वणा' ग. १७. 'च' ग-पुस्तके नास्ति. १८. 'भट्टनायकः अङ्गत्वं न रूपतेति' ग. १९. 'उपालब्धः' ख, 'उपारम्भः' ग. २०. 'आत्मना' क. २१. 'द्वयोक्तिर्न तैरुन्नयाद्वस्त्वलंकार' ग. २२. 'तत्र तेभ्यस्तावत्' क. २३. 'क्षिप्तं' क-ख. २४. 'हि' क-ख-पुस्तकयोर्नास्ति.

तस्य वाच्यादन्यत्वम्। तथा ह्याद्यस्तावत्प्रभेदो वाच्याद्दूरं विभेदवान्। स हि कदाचिद्वाच्ये विधिरूपे प्रतिषेधरूपः। यथा—

'भम धम्मिअ वीसत्थो सो सुणओ अज्ज मारिओ देण।
गोलाणइकच्छकुडङ्गवासिणा दरिअसीहेण॥'

---

तथाप्यर्थसामर्थ्यस्य सहकारिणः सर्वत्रानपायाद्वाच्यसामर्थ्याक्षिप्तत्वम्। शब्दशक्तिमूलानुरणनव्यङ्ग्येऽप्यर्थसामर्थ्यात्प्रतीयमानावगतिः। शब्दशक्तिः केवलमवान्तरकरण इति वक्ष्यामः। **दूरं विभेदवानिति।** विधिनिषेधौ विरुद्धाविति न कस्यचिदपि विमतिः। एतदर्थं प्रथमं तावदेतावेवोदाहरति—'भ्रम धार्मिक विश्रब्धः स शुनकोऽद्य मारितस्तेन। गोदावरीनदीकूललतागहनवासिना दृप्तसिंहेन॥' कस्याश्चित्संकेतस्थानं जीवितसर्वस्वायमानं धार्मिकसंचरणान्तरायदोषात्तदवलुप्यमानपल्लवकुसुमादिविच्छायीकरणाच्च परित्रातुमियमुक्तिः। तत्र स्वतःसिद्धमपि भ्रमणं श्वभयेनापोहितमिति प्रतिप्रसवात्मको निषेधाभावरूपः, न तु नियोगप्रैषादिरूपोऽत्र विधिः। अतिसर्गप्राप्तकालयोर्ह्ययं लोट्। तत्र भावतदभावयोर्विरोधाद्द्वयोस्तावन्न युगपद्वाच्यता, न क्रमेण। विरम्य व्यापारद्वयाभावात्। 'विशेष्यं नाभिधा गच्छेत्' इत्यादिनाभिधाव्यापारस्य विरम्य व्यापारासंभवाभिधानात्। ननु तात्पर्यशक्तिरपर्यवसिता विवक्षया दृप्तधार्मिकतदादिपदार्थान्वयरूपमुख्यार्थबाधकबलेन विरोधनिमित्तया विपरीतलक्षणया च वाक्यार्थीभूतनिषेधप्रतीतिमभिहितान्वयदृशा करोतीति शब्दशक्तिमूल एव सोऽर्थः। एवमनेनोक्तमिति हि व्यवहारस्तत्र वाच्यातिरिक्तोऽन्योऽर्थ इति नैतत्। त्रयो ह्यत्र व्यापाराः संवेद्यन्ते—पदार्थेषु सामान्यात्मस्वभिधाव्यापारः, समयापेक्षार्थावगमनशक्तिः, ह्यभिधासमयश्च। तावत्येव न विशेषांशे। आनन्त्याद्व्यभिचाराच्च। एकस्य ततो विशेषरूपे वाक्यार्थे तात्पर्यशक्तिः परस्परान्विते। 'सामान्यान्यन्यथासिद्धेर्विशेषं गमयन्ति हि' इति न्यायात्। तत्र च द्वितीयकक्ष्यायां भ्रमेति विध्यतिरिक्तं न किंचित्प्रतीयते। अन्वयमात्रस्यैव प्रतिपन्नत्वात्। नहि 'गङ्गायां घोषः' 'सिंहो बटुः' इत्यत्र यथान्वय एव बुभूषन्प्रतिहन्यते। योग्यताविरहात्। तथा तव भ्रमणनिषेद्धा स श्वा सिंहेन हतः। तदिदानीं भ्रमणनिषेधकारणवैकल्पाद्भ्रमणं तवोचितमित्यन्वयस्य न काचित्क्षतिः। अत एव मुख्यार्थबाधा नात्र शङ्क्येति। न विपरीतलक्षणाया अवसरः। भवतु वासौ।

---

१. 'दूरप्रविभेदवान्' ग.

---

१. 'सामर्थ्यादेव गतिः' ग. २. 'कस्यापि' ग. ३. 'तावदेवोदाहरति' क-ख. ४. 'विश्वस्तः' क-ख. ५. 'श्वाद्य' क-ख. ६. 'तीरलतागहनदृप्तसिंहेन' ग. ७. 'प्रसवार्थको न विषयाभावरूपो' ग. ८. 'रूपो विधिरिति सर्वं प्राप्तकालयोग्यम्। तत्र भाव तदभाव' ग. ९. 'न' क-ख-पुस्तकयोर्नास्ति. १०. 'विशेषं' ख. ११. 'व्यापारस्यासंभवाभिधानात्' क-ख. १२. 'शक्ति' क-ख-पुस्तकयोर्नास्ति. १३. 'तन्न' ग. १४. 'व्यवहाराः' ग. १५. 'इत्यत्रापि' ग. १६. 'निषेधकारण' ग. १७. 'इत्यत्रान्वयस्य' ख. १८. 'चासौ' ग.



तथापि द्वितीयस्थानसंक्रान्ताभावादसौ न भवति। तथा हि मुख्यार्थबाधायां लक्षणाप्रकृतिः। सा च विरोधप्रतीतिरेव। न चात्र पदार्थानां स्वात्मनि विरोधः। परस्परं विरोध इति चेत्, सोऽयं तर्ह्यन्वये विरोधः प्रत्येयः। न च प्रतिपन्नेऽन्वये विरोधप्रतीतिः। प्रतिपत्तिश्चान्वयस्य नाभिधाशक्त्या। तस्याः पदार्थप्रतिपत्त्युपक्षीणाया विरम्य व्यापारात् इति तात्पर्यशक्त्यैवान्वयप्रतिपत्तिः। नन्वेवमपि 'अङ्गुल्यग्रे करिवरशतम्' इत्यत्राप्यन्वयप्रतीतिः स्यात्। किं न भवत्यन्वयप्रतीतिः। दशदाडिमादिवाक्यवत्। किं तु प्रमाणान्तरेण सोऽन्वयः प्रत्यक्षादिना बाधितः प्रतिपन्नोऽपि शुक्तिकायां रजतमिवेति तदवगमकारिणो वाक्यस्याप्रामाण्यम्। 'सिंहो माणवकः' इत्यत्र द्वितीयकक्ष्यानिविष्टतात्पर्यशक्तिसमर्पितान्वयबाधकोल्लासनानन्तरमभिधातात्पर्यशक्तिद्वयव्यतिरिक्ता तावत्तृतीयैव शक्तिस्तद्बाधकशक्तिविधुरीकरणनिपुणा लक्षणाभिधाना समुल्लसति। नन्वेवं 'सिंहो बटुः' इत्यत्रापि काव्यरूपता स्यात्। ध्वननलक्षणस्यात्मनोऽत्रापि समनन्तरं वक्ष्यमाणतया भावात्। ननु घटेऽपि जीवव्यवहारः स्यात्। आत्मनो विभुत्वेन तत्रापि भावात्। शरीरस्य खलु विशिष्टाधिष्ठानयुक्तस्य सत्यात्मनि जीवव्यवहारः। न यस्य कस्यचिदिति चेत्, गुणालंकारौचित्यसुन्दरशब्दार्थशरीरस्य सति ध्वननात्मन्यात्मनि काव्यरूपताव्यवहारः। न चात्मनोऽसारता काचिदिति समानम्। न चैवं भक्तिरेव ध्वनिः। भक्तिर्हि लक्षणाव्यापारस्तृतीयकक्ष्यानिवेशी। चतुर्थ्यां तु कक्ष्यायां ध्वननव्यापारः। तथा हि त्रितयसंनिधौ लक्षणा प्रवर्तत इति तावद्भवन्त एव वदन्ति। तत्र मुख्यार्थबाधता तावत्प्रत्यक्षादि प्रमाणान्तरमूला। निमित्तं च यदभिधीयते सामीप्यादि तदपि प्रमाणान्तरावगम्यमेव। यत्त्विदं घोषस्यातिपवित्रत्वशीतलत्वसेव्यत्वादिकं प्रयोजनमशब्दान्तरवाच्यं प्रमाणान्तराप्रतिपन्नम्, बटोर्वा पराक्रमातिशयशालित्वं तत्र शब्दस्य तावन्न व्यापारः। तथाहि तत्सामीप्यात्तद्धर्मत्वानुमानमनैकान्तिकम्, सिंहशब्दवाच्यत्वं च बटोरसिद्धम्। अथ यत्र यत्रैवंशब्दप्रयोगस्तत्र तत्र तद्धर्मयोग इत्यनुमानान्तरं कथं तथापि व्याप्तिग्रहणकाले मौलिकं प्रमाणान्तरं वाच्यं च नास्ति।

---

१. 'लक्षणायां' क. २. 'बाधा च' ग. ३. 'अपि' ग-पुस्तके नास्ति. ४. 'दशदाडिमानि, षडपूपाः, कुण्डमजाजिनम्, पललपिण्डः, अधरोरुकमेतत्कुमार्याः, स्फैयकृतस्य पिता प्रतिशीनः, इति समुदायोऽत्रानर्थकः।' इति व्याकरणमहाभाष्यम् (१।२।४५). ५. 'एवेति' ग. ६. 'तदपगम' ग. ६. 'तावत्' ग-पुस्तके नास्ति. ८. 'रूपत्वं' ग. ९. 'ध्वनिलक्षण' ग. १०. 'समनन्तरमेव लक्ष्यमाण' ग. ११. 'न घटेऽपि' क. १२. 'अन्यस्य कस्यचिदिति' ग. १३. 'गुणालंकारौचित्य' ग-पुस्तके नास्ति. १४. 'ध्वन्याख्ये आत्मनि' ग. १५. 'तथाहीति' ग. १६. 'तावद्भवतां मतम्' ग. १७. 'बाधा' ग. १८. 'सेव्यत्वादिकं प्रयोजनं सशब्दान्तरावाच्यं' क, 'सेव्यत्वादिः शब्दान्तरवाच्यं' ग. १९. 'पदेन वा' ग. २०. 'न तावन्न' ग. २१. 'अनैकान्तिकत्वं' ग. २२. 'इत्यनुमानं तस्यापि' ग. २३. 'वाच्यं' क-ख-पुस्तकयोर्नास्ति.

न च स्मृतिरियम् । अननुभूतेस्तदयोगा[1]न्नियमाप्रतिपत्ते[2]र्वक्तुरेतदेवविवक्षितमित्यध्यवसायाभावप्रसङ्गाच्चेत्यस्ति तावदत्र शब्दस्यै[3]व व्यापारः । व्यापारश्च नाभिधात्मा । समयाभावात् । न तात्पर्यात्मा । तस्यान्वयप्रतीतावेव परिक्षयात् । [4]न लक्षणात्मा । उक्तादेव हेतोः [5]स्खलद्गतित्वाभावात् । तत्रापि हि[6] स्खलद्गतित्वे पुनर्मुख्यार्थबाधानिमित्तं प्रयोजनमित्यनवस्था स्यात् । अत एव यत्केनचिल्लक्षितलक्षणेति नाम कृतं तद्व्यसनमात्रम् । तस्मादभिधातात्पर्यलक्षणव्यतिरिक्तश्चतुर्थोऽसौ व्यापारो ध्वनन[7]द्योतनव्यञ्जनप्रत्यायनावगमनादिसोदरव्यपदेशनिरूपितोऽभ्युपगन्तव्यः । यद्वक्ष्यति—'मुख्यां वृत्तिं परित्यज्य गुणवृत्त्यार्थदर्शनम् । यदुद्दिश्य फलं तत्र शब्दो नैव स्खलद्गतिः ॥' इति । तेन समयापेक्षा वाच्यावगमनशक्तिरभिधाशक्तिः । तदन्यथानुपपत्ति[8]सहायार्थावबोधनशक्तिस्तात्पर्यशक्तिः । मुख्यार्थबाधादिसहकार्यपेक्षार्थप्रतिभासनशक्तिर्लक्षणाशक्तिः । [9]तच्छक्तित्रयोपजनितार्थावगममूल[10]जाततत्प्रतिभापवित्रित[11]प्रतिपत्तृ[12]प्रतिभासहायार्थद्योतनशक्तिर्ध्वननव्यापारः । स च प्राग्वृत्तं व्यापारत्रयं न्यक्कुर्वन्[13]प्रधानम् । अत एव काव्यात्मेत्याशयेन विधिनिषेधप्रमुखतया च प्रयोजनविषयोऽपि निषेधविषय इ[14]त्युक्तः । अभ्युपगममात्रेण चै[15]तदुक्तम् । न त्वत्र लक्षणात्यन्ततिरस्कृता । अन्यसंक्रमणयोरभावात् । नह्यर्थशक्तिमूलेऽस्या व्यापारः । सहकारिभेदाच्च शक्तिभेदः स्पष्ट एव । तथा तस्यैव शब्दस्य व्याप्तिस्मृत्यादिसहकृतस्य विवक्षावगतावनुमापकत्वव्यापारः । अक्षादिस[16]हकृतस्य वा विकल्पत्वव्यापारः । एवमभिहितान्वयवादिनामि[17]यदनपह्नवनीयम् । यो[18]ऽप्यन्विताभिधानवादी 'यत्परः शब्दः स शब्दार्थः' इति [19]हृदये गृहीत्वा शरवदभिधाव्यापारमेव दीर्घदीर्घमिच्छति तस्य यदि दीर्घदीर्घो व्यापारस्तदेकोऽसाविति कुतः । भिन्नविषयत्वात् । अथानेकोऽसौ तद्विषयसहकारिभेदादसजातीय ए[20]व युक्तः । सजातीये च [21]कार्ये विरम्यव्यापारः शब्दकर्मबुद्ध्यादीनां पदार्थविद्भिर्निषिद्धः । असजातीये [22]चास्मन्नय एव । अथ योऽसौ चतुर्थकक्ष्यानिविष्टोऽर्थः स[23] एव झटिति वाक्येनाभिधीयत इत्येवंविधं दीर्घदीर्घत्वं विवक्षितम् । [24]तर्हि तत्र संकेताकरणात्कथं साक्षात्प्रतिपत्तिः । निमित्तेषु

१. 'नियम्याप्रति' ग. २. 'वक्तुरेवं विवक्षितं' क-ख. ३. 'एव' क-ख-पुस्तकयोर्नास्ति. ४. 'न' ग-पुस्तके नास्ति. ५. 'स्खलितगतित्वा' ग. ६. 'हि' क-ख-पुस्तकयोर्नास्ति. ७. 'द्योतन' ग-पुस्तके नास्ति. ८. 'सहायार्थबोधन' क-ख. ९. 'तच्छक्तिबाधोपजनित' ग. १०. 'ज्ञाततत्प्रतिभास' ग. ११. 'प्रतिपत्तृ' क-पुस्तके नास्ति. १२. 'प्रभा' ग. १३. 'प्रधानभूतः काव्यात्मे' ग. १४. 'इत्युक्तम्' ग. १५. 'चेदमुक्तम्' ग. १६. 'सहकृत्य वा' ग. १७. 'तावदियमनपक्षयणीयं' ग. १८. 'यो ह्यन्विता' ग. १९. 'हृदये' ग-पुस्तके नास्ति. २०. 'एव' ग-पुस्तके नास्ति. २१. 'कार्ये' क-ख-पुस्तकयोर्नास्ति. २२. 'च' ग-पुस्तके नास्ति. २३. 'स इति झडिति' क-ख. २४. 'तत्र तर्हि' क-ख.



संकेतः नैमित्तिकस्त्वसावर्थ [1]इति संकेतानपेक्ष [2]एवेति चेत्, [3]पश्यत श्रोत्रियस्यानुवाकहतबुद्धेरुक्तिकौशलम् । यो ह्यसौ पर्यन्तकक्ष्या[4]भागार्थः प्रथमं प्रतीतिपथमवतीर्णस्तस्य पश्चात्तनाः [5]पदार्था निमित्तभावं [6]गच्छन्तीति नूनं मीमांसकस्य प्रपौत्रं प्रति नैमित्तिकत्वमभिमतम् । अथोच्यते—पूर्वं तत्र संकेतग्रहणसंस्कृतस्य तथा प्रतिपत्तिर्भवतीत्यमुया वस्तुस्थित्या निमित्तत्वं पदार्थानाम्, तर्हि [7]तदनुसारानुपयोगेन न किंचिदप्युक्तं स्यात् । न चापि प्राक्पदार्थेषु संके[8]तग्रहणं वृत्तम् । अन्वितानामेव [9]सर्वदा प्रयोगात् । अवापोद्वापाभ्यां तथाभाव इति चेत्, संकेतः पदार्थमात्र एवेत्यभ्युपगमे पाश्चात्यैव विशेषप्रतीतिः । अथोच्यते—दृष्टैव झडिति तात्पर्यप्रतिपत्तिः कि[10]मत्र कुर्म इति तदिदं [11]वयमपि न नाङ्गीकुर्मः । यद्वक्ष्यामः—'तद्वत्सचेतसां सोऽर्थो वाच्यार्थविमुखात्मनाम् । बुद्धौ [12]तत्त्वावभासिन्यां झडित्येवावभासते ॥' इति । किं तु सातिशयानुशीलनाभ्यासात्तत्र संभाव्यमानोऽपि क्रमः सजातीयतद्विकल्पपरम्परानुदयादभ्यस्तविषयव्याप्तिसमय[13]स्मृतिक्रमवन्न संवेद्यत इति निमित्तनैमित्तकभावश्चावश्यश्रयणीयः । अन्यथा गौणलाक्षणिकयोर्मुख्याद्भेदः 'श्रुतिलिङ्गादिप्रमाणषट्कस्य परदौर्बल्यम्' इत्यादि [14]प्रक्रियाविघातो निमित्ततावैचित्र्येणैवास्याः [15]सामर्थ्यान्निर्निमित्ततावैचित्र्ये चाभ्युपगते किमपरमस्मास्वसूयया । येऽप्यविभक्तं [16]स्फोटं वाक्यं तदर्थरूपमित्याहुस्तैरप्यविद्यापदपतितैः सर्वेयमनुसरणीया प्रक्रिया । तदुत्तीर्णत्वे तु सर्वं [17]परमेश्वराद्वयं ब्रह्मेत्यस्मच्छास्त्रानुसरणेन विदितं तन्त्रालोकग्रन्थं विचारयतेत्यास्ताम् । यत्तु भट्टनायकेनोक्तम्—'इह दृप्तसिंहादिप[18]दप्रयोगेऽपि धार्मिकपदप्रयोगे च भयानकरसावेशकृतैव निषेधावगतिः । तदीय[19]भीरुधीरत्वप्रकृतिनियमावगममन्तरेणैकान्ततो निषेधगत्यभावात्' इति, [20]तन्न । केवलार्थसामर्थ्यान्निषेधगतेर्निमित्तमिति तत्रोच्यते—केनोक्तमेतत्, 'वक्तृप्रतिपत्तृविशेषावगमविरहेण शब्दगतध्वननव्यापारविरहेण च निषेधावगतिः' इति । वक्तृप्रतिपत्तृप्रतिभासहकारित्वं ह्यस्माभिर्द्योतनस्य प्राणत्वेनोक्तम् । भयानकरसावेशश्च [21]न वर्ण्यस्य । भयमात्रोत्पत्त्यभ्युपगमात् । प्रतिपत्तुश्च रसावेशो रसाभिव्यक्त्यैव । रसस्य च शब्दवाच्यत्वं तेनापि नोपगतमिति व्यङ्ग्यत्वमेव । प्रतिपत्तुरपि रसावेशो न नियतः । नह्यसौ नियमेन

१. 'इति' ग-पुस्तके नास्ति. २. 'एव' ग-पुस्तके नास्ति. ३. 'पश्य' क-ख. ४. 'भागार्थः' ग. ५. 'पदार्थावगमनिमित्त' ग. ६. 'आगच्छन्तीति' ख. ७. 'तदनुरणनोपयोगि न तदप्युक्तं' ग. ८. 'संबन्धग्रहणं' ग. ९. 'सदा' क-ख. १०. 'अत्र' ग-पुस्तके नास्ति. ११. 'अपि न' क-ख-पुस्तकयोर्नास्ति. १२. 'तत्त्वार्थदर्शिन्यां' ग. १३. 'स्मृतिं तमवन्न' ग. १४. 'प्रक्रियाविकल्पास्तन्निमित्त' ग. १५. 'समर्थितत्वात्' ग. १६. 'स्फोटकवाक्यं तदर्थमाहुः' ग. १७. 'परमेश्वराद्वयं ब्रूमहेत्यस्मच्छास्त्राकारणेन न विदितं तत्त्वालोक' ग. १८. 'पदयोगेऽपि' क-ख. १९. 'भीरुत्व' ग. २०. 'तत्र' ख. २१. 'न निवार्यते तस्य' ग.

[1]क्वचिद्वाच्ये प्रतिषेधरूपे विधिरूपो यथा—

'अत्ता एत्थ णिमज्जइ एत्थ अहं दिअसअं पलोएहि ।
मा पहिअ रत्तिअन्धअ सेज्जाए महँण मज्जहिसि ॥'

---

भी[1]रुधार्मिकसब्रह्मचारी सहृदय एव । अथ तद्विशेषोऽपि सहकारी कल्प्यते तर्हि वक्तृप्रतिपत्तृप्रतिभाप्राणितो ध्वननव्यापारः किं न सह्यते । किं च वस्तुध्वनिं दूषयता रसध्वनिस्तदनुग्राहकः समर्थ्यत इति सुष्ठुतरां ध्वनिध्वंसोऽयम् । यदाह—'क्रोधोऽपि देवस्य वरेण तुल्यः' इति । अथ रसस्यैवे[2]यत्ता प्राधान्यमुक्तं तत्[3]को न सहते । अथ वस्तुमात्रध्वनेरेतदुदाहरणं न युक्तमित्युच्यते तथापि [4]काव्योदाहरणत्वाद्द्वावप्यत्र ध्वनी स्तः । को दोषः । अपि चोक्तनीत्या संभोगाभिलाषविभावसंकेतस्थानोचितविशिष्टकाक्वाद्य[5]नुभावशबलनोचितशृङ्गाररसानुवेधः । रसस्यालौकिकत्वात् । तावन्मात्रादेव[6] भेदस्यानुगमात् । प्रथमं निर्विवादसिद्धविविक्तविधिनिषेधप्रदर्शनाभिप्रायेण चैतद्व[7]स्तुध्वनेरुदाहरणं दत्तम् । य[8]स्तु ध्वनिव्याख्यानोद्यतस्तात्पर्यशक्तिमेव विवक्षासूचकत्वमेव वा ध्वननमवोचत्स नास्माकं हृदयमावर्जयति । यदाहुः—'भिन्नरुचिर्हि लोकः' इति[9] । तदेतदग्रे यथायथं प्रतनिष्याम इत्यास्तां तावत् । [10]भ्रमेति [11]अतिसृष्टोऽपि प्राप्तस्ते भ्रमणकालः । धार्मिकेति कुसुमाद्युपकरणार्थं युक्तं ते भ्रमणम् । विश्रब्ध इति शङ्काकारणवैकल्यात् । स इति यस्ते भयप्रकम्प्रामङ्गलतिकामकृत । अद्येति दिष्ट्या वर्धस इत्यर्थः । मारित इति पुनरस्यानुत्थानम् । तेनेति यः पूर्वं [12]कर्णोपकर्णिकया त्वयाप्याकर्णितो गोदावरीकच्छगहने प्रतिवसतीति । पूर्वमेव हि तद्रक्षायै [13]त्वत्तयोपश्रावितः स चाधुना तु दृप्तत्वात्ततो गहनान्न निःसरतीति प्रसिद्धगोदावरीतीर[14]परिसरानुसरणमपि तावत्कथाशेषीभूतं का कथा तल्लतागहनप्रवेशशङ्[15]कया इति भावः । 'श्वश्रूरत्र शेते अथवा निमज्जति अत्राहं दिवसकं प्रलोकय । मा पथिक रात्र्यन्ध शय्यायामा[16]वयोर्माङ्क्षीः ॥ अत्र शयिष्ठा वा ।' महँण इति निपातोऽनेकार्थवृत्तिरत्रावयोरित्यर्थे न तु ममेति । एवं हि विशेषवचनमेव शङ्काकारि

---

१. 'क्वचित्प्रतिषेधे विधिरूपो' ग.

---

१. 'भीरुधार्मिकस्य सब्रह्मचारिहृदय एव' क-ख. २. 'इयत्ता' क. ३. 'तत्केन सह्यते' क-ख. ४. 'कार्योदाहरणत्वाद्द्वावपि ध्वनी स्ताम्' क-ख. ५. 'अनुभावं स्ववलनोदित' ग. ६. 'एव चानुपगमात्' ग. ७. 'रसध्वनेः' ग. ८. 'यत्तु' ग. ९. 'इति' ख-पुस्तके नास्ति, 'इति वदताग्रे यथायथं' ग. १०. 'भ्रमेति' ग. ११. 'असि' ग. १२. 'कर्णाकर्णिकया' ग. १३. 'यत्त्वयापश्रावितोऽसावधुना' क, 'एतत्त्वया' ख. १४. 'तीर' क-ख-पुस्तकयोर्नास्ति. १५. 'आशङ्कयेति' ग. १६. 'आवयोः शयिष्ठाः। हे इति निपातोऽनेकार्थवृत्तिरत्र न तु ममेति' ग.



क्वचिद्वाच्ये विधिरूपेऽनुभयरूपो यथा—

'वच्च मह व्विअ एक्केइ होन्तु णीसासरोइअव्वाइं ।
मा तुज्ज वि तीअ विणा दक्खिण्णहअस्स जाअन्तु ॥'

---

भवेदिति प्रच्छन्नाभ्युपगमो न स्यात् । [1]कश्चित्प्रोषितपतिकां तरुणीमवलोक्य प्र[2]वृद्धमदनाङ्कुरः संपन्नः पान्थोऽनेन निषेधद्वारेण तयाभ्युपगत इति निषेधाभावोऽत्र विधिः । न तु निमन्त्रणरूपोऽप्रवृत्तप्र[3]वर्तनास्वभावः । सौभाग्याभिमान[4]खण्डनाप्रसङ्गात् । अत एव रात्र्यन्धेति समुचितसमयसंभाव्यमानविकाराकुलितत्वं ध्वनितम् । भावतदभावयोश्च [5]साक्षाद्विरोधाद्वाच्याद्[6]व्यङ्ग्यस्य स्फुटमेवान्यत्वम् । य[7]त्त्वाह भट्टनायकः—'अहमित्यभिनयविशेषणात्मदशावेदनाच्छाब्दमेतदपि' इति । तत्राहमिति [8]शब्दस्य तावन्नायं साक्षादर्थः । काक्वादिसहायस्य च तावति ध्वननमेव व्यापार इति ध्वनेर्भूषणमेतत् । [9]अत्तेति प्रयत्नेनानिभृतसंभोगपरिहारः । अथ यद्यपि भवान्मदनशरासारदीर्यमाणहृदय उपेक्षितुं न युक्तस्तथापि किं करोमि पापो दिवसकोऽयम् । अनुचितत्वात्कुत्सितोऽयमित्यर्थः । प्राकृते पुंनपुंसकयोरनियमः । न च सर्वथा समुपेक्ष्यः । यतोऽत्रैवाहं तत्प्रलोकय नान्यतोऽहं गच्छामि । तदन्योन्यवदनावलोकनविनोदेन दिनं तावदतिवाहयाव इत्यर्थः । प्रतिपन्नमात्रायां च रात्रावन्धीभूतो [10]मदीयायां शय्यायां मा श्लिक्षः । अपि तु निभृतनिभृतमेत्य [11]दत्तावधाननिकटकण्टकनिद्रान्वेषणपूर्वकमितीयदत्र ध्वन्यते । 'व्रज ममैवैकस्या भवन्तु निःश्वासरोदितव्यानि । मा तवापि तया विना दाक्षिण्यहतस्य [12]जनिषत ॥' अत्र व्रजेति विधिः । न प्रमादादेव नायिकान्तरसंगमनं तव, अपि तु [13]गाढानुरागादेव । अन्यादृङ्मुखरागगोत्रस्खलनादि च । केवलं पूर्वकृतानुपालनात्मना दाक्षिण्येनैकरूपताभिमानेनैव[14] त्वम[15]त्र स्थितः, तत्सर्वथा शठोऽसीति गाढमन्युरूपोऽयं खण्डितनायिकाभिप्रायोऽत्र प्रतीयते । न चासौ वि[16]ध्यभावरूपो निषेधः । नापि विध्यन्तरमेव[17] । अन्यनिषेधाभावात् । दे इति निपातः प्रार्थनायाम् । आ इति तावच्छब्दार्थे ।

---

१. 'कांचित्' ग. २. 'प्रबुद्धमदनातुरं संपन्नं' ग. ३. 'प्रवर्तनारूपः' ग. ४. 'खण्डनापदेशादत्रैव रात्र्यन्धेति' क-ख. ५. 'साक्षात्' ग-पुस्तके नास्ति. ६. 'व्यक्त्यास्य स्फुटं' ग. ७. 'तत्रापि भट्टनायकः' ग. ८. 'तावच्छब्दस्य नायं' ग. ९. 'अत्रेति प्रयत्नेनामृतसंभोग' ग. १०. 'मदीयां शय्यां मा श्लिक्ष्याः' क-ख. ११. 'दत्ताभिधान' क-ख. १२. 'जनिष्यते' क-ख. १३. 'गाढानुगाढेनान्यादृङ्मुखवर्णो गोत्रस्खलनादि तानि च केवलं पूर्वकृतानुपालनं न दाक्षिण्येन नैक' ग. १४. 'एव' ग-पुस्तके नास्ति. १५. 'अत्रास्थितः' ग. १६. 'व्रजनाभाव' ग. १७. 'एव' क-ख-पुस्तकयोर्नास्ति.

क्वचिद्वाच्ये प्रतिषेधरूपेऽनुभयरूपो यथा—

'दे आ पसिअ णिवत्तसु मुहससिजोह्नाविलुत्ततमणिवहे[1] ।
अहिसारिआणँ विग्घं करोसि अण्णाणँ वि हआसे ॥'

तेनायमर्थः[1]—'प्रार्थये[2] तावत्प्रसीद निवर्तस्व मुखशशिज्योत्स्ना[3]विलुप्ततमोनिवहे । अभिसारिकाणां विघ्नं करोष्यन्यासामपि हताशे ॥' अत्राध्यवसितान्[4]निवर्तस्वेति प्रतीतेर्निषेधो वाच्यः । गृहागता[5] नायिका गोत्रस्खलिताद्यपराधिनि नायके सति ततः प्रतिगन्तुं प्रवृत्ता, नायकेन चाटूपक्रम[6]पूर्वकं निवर्त्यते—न केवलं स्वात्मनो मम च निर्वृत्त्या[7] विघ्नं करोषि, यावदन्यासामपि । ततस्तव न कदाचन सुखलवलाभोऽपि भविष्यतीत्यत[8] एव हताशासीति वल्लभाभिप्रायरूपश्चाटुविशेषो[9] व्यङ्ग्यः । यदि[10] वा सख्योपदिश्यमानापि तदवधीरणया गच्छन्ती सख्योपदिश्यते—न केवलमात्मनो विघ्नं करोषि, लाघवादब[11]हुमानास्पदमात्मानं कुर्वती अत एव हताशा यावद्वदनचन्द्रिकाप्रकाशितमार्गतयान्यासामभिसारिकाणां विघ्नं करोषीति सख्यभिप्रायरूपश्चाटुविशेषो व्यङ्ग्यः । अत्र तु व्याख्यानद्वयेऽपि व्यवसितात्प्रतीपगमनात्प्रियतमगृहगमनाच्च निवर्तस्वेति पुनरपि वाच्य एव विश्रान्तेर्गुणीभूतव्यङ्ग्य[12]भेदस्य प्रेयोरसवदलंकारस्योदाहरणमिदं[13] स्यात्, न[14] ध्वनेः । तेनायमत्र भावः—काचिद्रभसात्प्रियतमममभिसरन्ती तद्गृहाभिमुखमागच्छता तेनैव हृदयवल्लभेनैवमुपश्लोक्यतेऽप्रत्यभिज्ञानच्छलेन । अत एवात्मप्रत्यभिज्ञापनार्थमेव नर्मवचनं हताशे इति । अन्यासामपि[15] विघ्नं करोषि तत्र चेप्सितलाभो भविष्यतीति का प्रत्याशा । अत एव मदीयं वा गृहमागच्छ, त्वदीयं वा गच्छाव इत्युभयत्रापि तात्पर्यादनुभयरूपो वल्लभाभिप्रायश्चाट्वात्मा व्यङ्ग्य इत्येव व्यवतिष्ठते । अन्ये तु—'तटस्थानां सहृदयानामभिसारिकां प्रतीयमुक्तिः' इत्याहुः । तत्र हताशे इत्यामन्त्रणादि[16] युक्तमयुक्तं वेति सहृदया एव प्रमाणम् । एवं वाच्यव्यङ्ग्ययोर्धार्मिकपान्थप्रियतमाभिसारिकाविषयैक्येऽपि स्वरूपभेदाद्भेद इति प्रतिपादितम् । अधुना तु विषयभेदादपि व्यङ्ग्यस्य वाच्याद्भेद इत्याह—**व्यवस्थापित इति** । विषयभेदोऽपि विचित्ररूपो व्यवतिष्ठमानः सहृदयैर्व्यवस्थापयितुं शक्यत इत्यर्थः । 'कस्य वा न भवति रोषो दृष्ट्वा प्रियायाः सव्रणमधरम् । सभ्रमरपद्माघ्राणशीले[1] वारितवामे सहस्वेदानीम् ॥' कस्य वेति अनीर्ष्यालोरपि । न भवति रोषो दृष्ट्वेति कृत्वापि कुतश्चिदेवापूर्वतया प्रियायाः सव्रणमधरं दृष्ट्वावलोक्य । सभ्रमरपद्माघ्राणशीले । शीलं हि कथंचिदपि वारयितुं न शक्यम् । वारिते वारणायां हे वामे तद(न)ङ्गीकारिणि सहस्वेदानीम् । उपालम्भपरम्परामित्यर्थः । अत्रायं भावः—'काचिदविनीता कुतश्चित्खण्डिताधरा तत्सविधसंविधाने भर्तरि तमनवलोकमानयेव[2] कयाचिद्विदग्धसख्या तद्वाच्यता[3]परिहारायैवम्[4]उच्यते । सहस्वेदानीमिति वाच्यमविनयवतीविषयम् । भर्तृविषयं तु अपराधो नास्तीत्यावेद्यमानं व्यङ्ग्यम् । तस्यां च प्रियतमेन गाढमुपालभ्यमानायां तद्व्यलीकशङ्कितप्रातिवेश्मिकलोकविषयं चाविनयप्रच्छादनेन प्रत्यायनं व्यङ्ग्यम् । तत्सपत्न्यां च तदुपालम्भतदविनयप्रहृष्टायां सौभाग्यातिशयख्यापनं प्रियाया इति शब्दबलादिति सपत्नीविषयं व्यङ्ग्यम् । सपत्नीमध्ये इयत्[5]खलीकृतास्मीति लाघवमात्मनि ग्रहीतुं न युक्तम् । प्रत्युतायं बहुमानः । सहस्व शोभस्वेदानीमिति सखीविषयं सौभाग्यप्रख्यापनं व्यङ्ग्यम् । अद्येयं तव प्रच्छन्नानुरागिणी हृदयवल्लभेत्थं रक्षिता । पुनः प्रकट[6]रदनदंशनविधिर्न विधेयः इति तच्चौर्यकामुकविषयसंबोधनं व्यङ्ग्यम् । इत्थं मयैतदपह्नुतमिति स्ववैदग्ध्यख्यापनं तटस्थविदग्धलोक[7]विषयं व्यङ्ग्यमिति । तदेतदुक्तं व्यवस्थापितशब्देन । अग्र इति द्वितीयोद्द्योते 'असंलक्ष्यक्रमव्यङ्ग्यः क्रमेणोद्द्योतितः परः' इति विवक्षितान्यपरवाच्यस्य द्वितीयप्रभेदवर्णनावसरे । तथाहि विधिनिषेधतदुभयात्मना रूपेण संकलय्य वस्तुध्वनिः संक्षेपेण सुवचनः, तथानालंकारध्वनिः । अलंकाराणां भूयस्त्वात् । तत एवोक्तम्—'सप्रपञ्चं' इति । **तृतीयस्त्वति** । तुशब्दो

---

१. 'तमोणिवहे' ख-ग.

---

१. 'तेनायमर्थः' ग-पुस्तके नास्ति. २. 'प्रसीद तावत्' ग. ३. 'ज्योत्स्नाभा' ग. ४. 'अत्रावसितागमनात्' ग. ५. 'गृहागतनायिका' क-ख. ६. 'चारूपक्रम' ग. ७. 'निर्वृत्या' ख, 'निर्वृति' ग. ८. 'भविष्यत्यत एवाह' क-ख. ९. 'चाविशेषो' ग. १०. 'यदि वा' क-ख-पुस्तकयोर्नास्ति. ११. 'अबहुमानं' क, 'अबहुमानमात्मानं' ख. १२. 'व्यङ्ग्यस्य च' ग. १३ 'इदं' क-ख-पुस्तकयोर्नास्ति. १४. 'तद्ध्वनेः' ग. १५. 'अन्यासां च' ग. १६. 'इत्यामन्त्रणौचित्यादि' ग.



क्वचिद्वाच्याद्विभिन्नविषयत्वेन[1] व्यवस्थापितो यथा—

'कस्स व ण होइ रोसो दट्ठूण पिआएँ सव्वणं अहरम् ।
सभमरपउमग्घाइणि वारिअवामे सहसु एह्णिम् ॥'

अन्ये चैवंविधाः प्रकारा वाच्याद्विभेदिनः प्रतीयमानभेदाः संभवन्ति । तेषां दिङ्मात्रमेतत्प्रदर्शितम् । द्वितीयोऽपि प्रभेदो वाच्याद्विभिन्नः सप्रपञ्चमग्रे दर्शयिष्यते । तृतीयस्तु रसादिलक्षणः प्रभेदो वाच्यसामर्थ्या-

---

१. 'क्वचिद्वाच्याद्' ग.

---

१. 'पद्माघ्रायिणि' क. २. 'तदनवलोक्यमानयैव' क-ख. ३. 'तदनार्येपरि' ग. ४. 'एतत्' क-ख. ५. 'इयत्ता' ख-ग. ६. 'प्रकटाधरदंशनविधिरत्र न युक्तः प्रत्युतायं बहुमानः इति' ग. ७. 'लोक' क-ख-पुस्तकयोर्नास्ति.

क्षिप्तः प्रकाशते । न तु साक्षाच्छब्दव्यापारविषय इति वाच्याद्विभिन्न एव । तथा हि वाच्यत्वं तस्य स्वशब्दनिवेदितत्वेन वा स्यात्, विभावादिप्रतिपादनमुखेन वा । पूर्वस्मिन्पक्षे स्वशब्दनिवेदितत्वाभावे रसादीनामप्रतीतिप्रसङ्गः । न च सर्वत्र तेषां स्वशब्दनिवेदितत्वम् । यत्राप्यस्ति

---

व्यतिरेके । वस्त्वलंकारौ शब्दाभिधेयत्वमध्यासाते तावद्रसभावतदाभासतत्प्रशमाः पुनर्न कदाचिदभिधीयन्ते । अथ चास्वाद्यप्राणतया प्रतिभान्ति तत्र तु ध्वननव्यापारादृते नास्ति कल्पनान्तरम् । स्खलद्गतित्वाभावे मुख्यार्थबाधादेर्लक्षणानिबन्धनस्यानाशङ्कनीयत्वात् । औचित्येन प्रवृत्तौ चित्तवृत्तेरास्वाद्यत्वे स्थायिन्या रसो व्यभिचारिण्या भावः । अनौचित्येन तदाभासः । रावणस्येव सीतायां रतेः । यद्यपि तत्र हास्यरसरूपतैव । 'शृङ्गाराद्धि भवेद्धासः' इति वचनात् । तथापि पाश्चात्येयं सामाजिकानां स्थितिः । तन्मयीभवनदशायां तु रतेरेवास्वाद्यतेति शृङ्गारतैव प्रतिभाति । पौर्वापर्यविवेकावधीरणेन । 'दूराकर्षणमोहमन्त्र इव मे तन्नाम्नि याते श्रुतिम्' इत्यादौ । तदसौ शृङ्गाराभास एव तदङ्गभावाभासश्चित्तवृत्तेः प्रशम एव प्रक्रान्ताया हृदयमाह्लादयति । यतो विशेषण तत एव तत्संगृहीतोऽपि पृथग्गणितोऽसौ । यथा—'एकस्मिञ्शयने पराङ्मुखतया वीतोत्तरं ताम्यतोरन्योन्यं हृदयस्थितेऽप्यनुनये संरक्षतोर्गौरवम् । दंपत्योः शनकैरपाङ्गवलनामिश्रीभवच्चक्षुषोर्भग्नो मानकलिः सहासरभसव्यावृत्तकण्ठग्रहः ॥' इत्यत्रेर्ष्यारोषात्मनो मानस्य प्रशमः । न चायं रसादिरर्थः । 'पुत्रस्ते जातः' इत्येतो यथा हर्षो जायते तथा नापि लक्षणया । अपि तु सहृदयस्य हृदयसंवादबलाद्विभावानुभावप्रतीतौ तन्मयीभावेनास्वाद्यमान एव रस्यमानतैकप्राणः सिद्धस्वभावसुखादिविलक्षणः परिस्फुरति । तदाह—**प्रकाशत इति** । तेन तत्र शब्दस्य ध्वननमेव व्यापारोऽर्थसहकृतस्येति । विभावाद्यर्थोऽपि पुत्रजन्महर्षन्यायेन तां चित्तवृत्तिं जनयतीति जननातिरि-

---

१. 'प्रकाश्यते' क-ख. २. 'स्व' क-ख-पुस्तकयोर्नास्ति. ३. 'निवेद्य त्वम् । यत्रापि वास्ति' क-ख.

---

१. 'व्यतिरेकी' क. २. 'अथवास्वाद्य' ग. ३. 'तु' क-ख-पुस्तकयोर्नास्ति. ४. 'रस' क-ख-पुस्तकयोर्नास्ति. ५. 'हास्यः' क-ख. ६. 'प्रति' ग-पुस्तके नास्ति. ७. 'तत एतत्संगृहीतो' क-ख. ८. 'भणितः' ख. ९. 'अन्योन्यस्य हृदि स्थिते' ग. १०. 'वलनात्' ग. ११. 'कण्ठग्रहम्' ग. १२. 'कोपात्मनो' ग. १३. 'उपशमः' ग. १४. 'रसाद्यर्थः' ग. १५. 'इत्यत्र' ग. १६. 'सहृदयहृदय' ग. १७. 'विभावप्रतीतेः' क-ख. १८. 'रसस्यमानतैक' क, 'रसरस्यमानतैक' ख. १९. 'प्रकाश्यते' क-ख. २०. 'न पुत्रजन्यविषन्यायेन' ग.



तत्रापि विशिष्टविभावादिप्रतिपादनमुखेनैवैषां प्रतीतिः । स्वशब्देन सा केवलमनूद्यते । न तु तत्कृता । विषयान्तरे तथा तस्या अदर्शनात् । नहि केवलशृङ्गारादिशब्दमात्रभाजि विभावादिप्रतिपादनरहिते काव्ये

---

क्तोऽर्थस्यापि व्यापारो ध्वननमेवोच्यते । **स्वशब्देति** । शृङ्गारादिनाभिधाव्यापारवशादेव । **निवेदितत्वेनेति । विभावादीति** । तात्पर्यशक्त्येत्यर्थः । तत्र स्वशब्दस्यान्वयव्यतिरेकौ रस्यमानतासारं रसं प्रति निराकुर्वन्ध्वननस्यैव ताविति दर्शयति—**न च सर्वत्रेति** । यथा भट्टेन्दुराजस्य—'यद्विश्रम्य विलोकितेषु बहुशो निःस्थेमनी लोचने यद्गात्राणि दरिद्रति प्रतिदिनं लूनाब्जिनीनालवत् । दूर्वाकाण्डविडम्बकश्च निबिडो यत्पाण्डिमा गण्डयोर्दृष्टे यूनि सयौवनासु वनितास्वेषैव वेषस्थितिः ॥' इत्यत्रानुभावविभावावबोधनोत्तरमेव तन्मयीभवनयुक्त्या तद्विभावानुभावोचितचित्तवृत्तिवासनानुरञ्जितस्वसंविदानन्दचर्वणगोचरोऽर्थो रसात्मा स्फुरत्येवाभिलाषचिन्तौत्सुक्यनिद्राधृतिग्लान्यालस्यश्रमस्मृतिवितर्कादिशब्दाभावेऽपि । एवं व्यतिरेकाभावं प्रदर्श्यान्वयाभावं दर्शयति—**यत्रापीति** । तदिति स्वशब्दनिवेदितत्वम् । **प्रतिपादनमुखेनेति** । शब्दप्रयुक्तया विभावादिप्रतिपत्त्येत्यर्थः । **सा केवलमिति** । तथा हि—'याते द्वारवतीं तदा मधुरिपौ तद्दत्तकम्पानतां कालिन्दीतटरूढवञ्जुललतामालिङ्ग्य सोत्कण्ठया । तद्गीतं गुरुबाष्पगद्गदगलत्तारस्वरं राधया येनान्तर्जलचारिभिर्जलचरैरप्युत्कमुत्कूजितम् ॥' इत्यत्र विभावानुभावौ म्लानतया प्रतीयेते । प्रतिपन्नं कुर्वतोत्कण्ठाचर्वणागोचरं प्रतिपाद्यत एव । सोत्कण्ठशब्दः केवलं सिद्धं साधयति । उत्कमित्यनेन तूक्तानुभावानुकर्षणं कर्तुं सोत्कण्ठशब्दः प्रयुक्त इत्यनुवादोऽपि नानर्थकः । पुनरनुभावप्रतिपादने हि पुनरुक्तमतन्मयीभावो वा । न तु तत्कृतेत्यत्र हेतुमाह—**विषयान्तर इति** । 'यद्विश्रम्य-' इत्यादौ न हि यदभावेऽपि यद्भवति तत्कृतं तदिति भावः । अदर्शनमेव द्रढयति—**नहीति** । केवलशब्दार्थं स्फुटयति—**विभावादीति । काव्य इति** । तव मते

---

१. 'अप्रतीतिः' ग. २. 'सा' क-ख-पुस्तकयोर्नास्ति. ३. 'तथा' ग-पुस्तके नास्ति. ४. 'दर्शनात्' ग.

---

१. 'ऽप्यर्थस्यापि' क. २. 'शृङ्गारादिना शब्देन' ग. ३. 'विभावादिति' ग. ४. 'व्यतिरेकस्यमानकसारं' ग. ५. 'स्थामिनी' क-ख. ६. 'दून' क-ख. ७. 'कृष्णे यूनि' ग. ८. 'विभावबोधानन्तर' ग. ९. 'वृत्तिर्वासना' क-ख. १०. 'चर्वण' क-ख-पुस्तकयोर्नास्ति. ११. 'भावभ्रम' ग. १२. 'निवेद्यत्वं' क-ख. १३. 'प्रतिपद्यते' क, 'प्रत्यपद्यत' ख. १४. 'सोत्कण्ठा' ग. १५. 'कर्तुं' क-ख-पुस्तकयोर्नास्ति. १६. 'नानार्थकः' ग. १७. 'प्रथयति' ग. १८. 'शब्दार्थः' ग. १९. 'विभावादिति' ग.

मनागपि रसवत्त्वप्रतीतिरस्ति । यतश्च स्वाभिधानमन्तरेण केवलेभ्योऽपि विभावादिभ्यो विशिष्टेभ्यो रसादीनां प्रतीतिः । केवलाच्च स्वाभिधानादप्रतीतिः । तस्मादन्वयव्यतिरेकाभ्यामभिधेयसामर्थ्याक्षिप्तत्वमेव रसादीनाम् । न त्वभिधेयत्वं कथंचित् । इति तृतीयोऽपि प्रभेदो वाच्याद्भिन्न एवेति स्थितम् । वाच्येन त्वस्य सहैव प्रतीतिरित्यग्रे दर्शयिष्यते ।

**'काव्यस्यात्मा स एवार्थस्तथा चादिकवेः पुरा ।**
**क्रौञ्चद्वन्द्ववियोगोत्थः शोकः श्लोकत्वमागतः ॥ ५ ॥'**

काव्यरूपतया प्रयुज्यमान इत्यर्थः । **मनागपीति** । 'शृङ्गारहास्यकरुणरौद्रवीरभयानकाः । बीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः ॥' इति । एवं स्वशब्देन सह रसादेर्व्यतिरेकान्वयाभावमुपदर्श्य तमेवोपसंहरति—यतश्चेत्यादिना कथंचिदित्यन्तेन । अभिधेयमेव सामर्थ्यं सहकारिशक्तिरूपं विभावादिकं रसध्वनने शब्दस्य कर्तव्ये, अभिधेयस्य च पुत्रजन्महर्षभिन्नयोगक्षेमतया जननव्यतिरिक्ते दिवाभोजनाभावविशिष्टपीनत्वानुमितरात्रिभोजनविलक्षणतया चानुमानव्यतिरिक्ते ध्वनने कर्तव्ये सामर्थ्यं शक्तिविशिष्टं समुचितसाकल्यम् । इति द्वयोरपि शब्दार्थयोर्ध्वननव्यापारः । एवं द्वौ पक्षावुपक्रम्याद्यो दूषितः । द्वितीयस्तु कथंचिद्दूषितः कथंचिदङ्गीकृतः । जननानुमानव्यापाराभिप्रायेण दूषितः ध्वननाभिप्रायेणाङ्गीकृतः । यस्त्वत्रापि तात्पर्यशक्तिमेव ध्वननं मन्यते स न वस्तुतत्त्ववेदी । विभावानुभावप्रतिपादके हि वाक्ये तात्पर्यशक्तिर्भेदसंसर्गे वा पर्यवस्येत् । न तु रस्यमानतासारे रसे । इत्यलं बहुना । इतिशब्दो हेत्वर्थे । इत्यपि हेतोस्तृतीयोऽपि प्रकारो वाच्याद्भिन्न एवेति संबन्धः । **सहैवेति** । इवशब्देन विद्यमानोऽपि क्रमो न संलक्ष्यत इति तद्दर्शयति—**अग्र इति** । द्वितीयोद्द्योते । एवं 'प्रतीयमानं पुनरन्यदेव' इतीयता ध्वनिस्वरूपं व्याख्यातम् ।

अधुना काव्यात्मत्वमितिहासव्याजेनैव दर्शयति—**काव्यस्यात्मेति** । स एवेति प्रतीयमानमात्रेऽपि प्रक्रान्ते तृतीय एव रसध्वनिरिति मन्तव्यम् । इतिहासबलात् प्र-

१. 'विशिष्टेभ्यो' ग-पुस्तके नास्ति. २. 'स्वाभिधानमात्रात्' क-ख. ३. 'प्रदर्शयिष्यते' ग.

१. 'प्रसज्यमान' ग. २. 'अत्रैव स्वशब्देन' ग. ३. 'उपदर्शि' ख, 'उपपत्त्या प्रदर्श्य तथैवोप' ग. ४. 'विधेयस्य पुत्र' ग. ५. 'शक्तिः विशिष्टसमुचित' ग. ६. 'अनुव्यापार' क, 'अनुमाव्यापार' ग. ७. 'शक्तिभेदः संसर्गे' ग. ८. 'सारो रसः' ग. ९. 'इह शब्देन' क-ख. १०. 'इति तद्दर्शयति' क-ख-पुस्तकयोर्नास्ति. ११. 'इतियतो' ग. १२. 'इतीतिहास' ग. १३. 'वाच्यस्य' क-ख.



विविधविशिष्टवाच्यवाचकरचनाप्रपञ्चचारुणः काव्यस्य स एवार्थः सारभूतः । संनिहितसहचरीविरहकातरक्रौञ्चाक्रन्दजनितः शोक एव श्लोकतया परिणतः ।

क्रान्तवृत्तिग्रन्थबलाच्च । तेन रस एव वस्तुत आत्मा । वस्त्वलंकारध्वनी तु सर्वथा रसं प्रति पर्यवस्येते इति वाच्यादुत्कृष्टौ तावित्यभिप्रायेण ध्वनिः काव्यस्यात्मेति सामान्येनोक्तम् । **शोक इति** । क्रौञ्चद्वन्द्ववियोगेन सहचरीहननोद्भूतेन साहचर्यध्वंसनेनोत्थितो यः शोकः स्थायिभावो निरपेक्षभावत्वाद्विप्रलम्भशृङ्गारोचितस्थायिभावत्वादन्य एव । स एव तथाभूतविभावतदुत्थाक्रन्दाद्यनुभावचर्वणया हृदयसंवादतन्मयीभवनक्रमादास्वाद्यमानतां प्रतिपन्नः करुणरसरूपतां लौकिकशोकव्यतिरिक्तां स्वचित्तवृत्तिसमास्वाद्यसारां प्रतिपन्नो रसः परिपूर्णकुम्भोच्छलनवच्चित्तवृत्तिनिःस्यन्दस्वभाववाग्विलापादिसमयानपेक्षित्वेऽपि चित्तवृत्तिव्यञ्जकत्वादिनयेनाकृतकतयैवावेशवशात्समुचितच्छन्दोवृत्तादिनियन्त्रितश्लोकरूपतां प्राप्तः मा निषादेत्यादि । न तु मुनेः शोक इति मन्तव्यम् । एवं हि सति तद्दुःखेन सोऽपि दुःखित इति कृत्वा रसस्यात्मतेति निरवकाशं भवेत् । न तु दुःखसंतप्तस्यैषा दशेति । एवं हि चर्वणोचितशोकस्थायिभावात्मककरुणरससमुच्छलनस्वभावत्वात्स एव काव्यस्यात्मा सारभूतस्वभावोऽपरशब्दवैलक्षण्यकारकः । एतदेवोक्तं हृदयदर्पणे—'यावत्पूर्णो न चैतेन तावन्नैवैवम्' इति । अगम इतिच्छान्दसेनाडागमेन । स एवेत्येवकारेणेदमाह—नान्य आत्मेति । तेन यदाह भट्टनायकः—'शब्दप्राधान्यमाश्रित्य तत्र शास्त्रं पृथग्विदुः । अर्थतत्त्वेन युक्तं तु वदन्त्याख्यानमेतयोः ॥ द्वयोर्गुणत्वे व्यापारप्राधान्ये काव्यधीर्भवेत्' इति तदपास्तम् । व्यापारो हि यदि ध्वननात्मा रसनास्वभावस्तन्नापूर्वमुक्तम् । अथाभिधैव व्यापारस्तथाप्यस्याः प्राधान्यं नेत्यावेदितं प्राक् । श्लोकं व्याचष्टे—**विविधेति** । विविधं तत्तदभिव्यञ्जनीयरसानुगुण्येन विचित्रं कृत्वा वाच्ये वाचके रचनायां च प्रपञ्चेन यच्चारुशब्दार्थालंकारगुणयुक्तमित्यर्थः ।

१. 'विशिष्ट' ग-पुस्तके नास्ति. २. 'प्रपञ्च' क-ख-पुस्तकयोर्नास्ति. ३. 'सारभूतः । तथा चादिकवेर्निहतसहचरी' ग.

१. 'ग्रन्थार्थे' क-ख. २. 'रसं पर्यवस्यत इति' ग. ३. 'क्रौञ्चस्य' क-ख. ४. 'स्वचित्तद्रुतमास्वाद्य' ग. ५. 'बलवत्' ग. ६. 'स्वरूपभाववाग्विलासादि ग. ७. 'व्यञ्जकत्वादिति नये', ग. ८. 'इव' ख. ९. 'प्राप्तम्' ग. १०. 'सति' ग-पुस्तके नास्ति. ११. 'तद्दुःख' ख, 'न च दुःख' ग. १२. 'भाववचनात्मक' क-ख. १३. 'समुचलन' ग. १४. 'रसभूतोऽपरशब्दस्य वैलक्षण्य' ग. १५. 'अगमेवेति । 'च्छान्देसेनडा' ग. १६. 'इति' क-ख-पुस्तकयोर्नास्ति. १७. 'अर्थे तत्त्वेन युक्ते' ग. १८. 'काव्यगीः' ग. १९. 'तदस्तम्' क-ख. २०. 'अथाभिधेय' क-ख. २१. 'प्राधान्ये' ग. २२. 'प्रपञ्चेन' क-ख-पुस्तकयोर्नास्ति.

'मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।
यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम् ॥'

शोको हि करुणरसस्थायिभावः प्रतीयमानरूप एवेति प्रतिपादितम् । प्रतीयमानस्य चान्यप्रभेददर्शनेऽपि रसभावमुखेनैवोपलक्षणम् । प्राधान्यात् ।

---

तेन सर्वत्रापि न ध्वननसद्भावेऽपि तथा व्यवहारः । आत्मसद्भावेऽपि क्वचिदेव जीवव्यवहार इत्युक्तं प्रागेव । तेनैतन्निरवकाशम् । यदुक्तं हृदयदर्पणे—'सर्वत्र तर्हि काव्यव्यवहारः स्यात्' इति । संनिहितसहचरीति विभाव उक्तः । आक्रन्दितशब्देनानुभावः । **जनित इति** । चर्वणागोचरत्वेनेति शेषः । ननु शोकचर्वणातो यदि श्लोक उद्भूतस्ततप्रतीयमानं वस्तु काव्यस्यात्मेति कुत इत्याशङ्क्याह—**शोको हीति** । करुणस्य च चर्वणागोचरात्मनः शोकः स्थायिभावः । शोके हि स्थायिभावे ये विभावानुभावास्तैः समुचिता चित्तवृत्तिश्चर्वणात्मा रस इत्यौचित्यात्स्थायिनो रसतापत्तिरित्युच्यते । प्राक्स्वसंविदितं परत्रानुमितं च चित्तवृत्तिजातं संस्कारक्रमेण हृदयसंवादमादधानं चर्वणायामुपयुज्यते । ननु प्रतीयमानरूपमात्मा तत्र त्रिभेदं प्रतिपादितम् । न तु रसैकरूपम् । अनेन चेतिहासेन रसस्यैवात्मभूतत्वमुक्तं भवतीत्याशङ्क्याभ्युपगमेनैवोत्तरमाह—**प्रतीयमानस्य चेति** । अन्यो भेदो वस्त्वलंकारात्मा । भावग्रहणं व्यभिचारिणोऽपि चर्व्यमाणस्य तावन्मात्राविश्रान्तावपि स्थायिचर्वणापर्यवसानोचितरसप्रतिष्ठामनवाप्यानुप्राणकत्वं भवतीत्युक्तम् । यथा—'नखं नखाग्रेण विघट्टयन्ती विवर्तयन्ती वलयं विलोलम् । आमन्द्रमाशिञ्जितनूपुरेण पादेन मन्दं भुवमालिखन्ती ॥' इत्यत्र लज्जायाः । रसभावशब्देन च तदाभासतत्प्रशमावपि संगृहीतावेव । अवान्तरवैचित्र्येऽपि तदेकरूपत्वात् । **प्राधान्यादिति** । रसपर्यवसानादित्यर्थः । तावन्मात्रविश्रान्तावपि चान्यशब्दवैलक्षण्यकारित्वेन वस्त्वलंकारध्वनेरपि जीवितत्वमौचित्यादुक्तमिति भावः ।

---

१. 'रस' ग-पुस्तके नास्ति.

---

१. 'प्रागेतन्नैतन्निरव' ग. २. 'निहत' ग. ३. 'विशेषः' क-ख. ४. 'काव्यात्मेति' ग. ५. 'तच्चर्वणा' ग. ६. 'शोकः' ग-पुस्तके नास्ति. ७. 'तत्त्वसमुचिताः' ग. ८. 'तच्चेति भेदं' ग. ९. 'उक्तं' ग-पुस्तके नास्ति. १०. 'उदित' क-ख. ११. 'अपि प्राणकत्वं' क-ख. १२. 'भवतीति' ग-पुस्तके नास्ति. १३. 'लज्जया' क-ख. १४. 'च' ग-पुस्तके नास्ति. १५. 'चाशब्द' ग. १६. 'एवौचित्यात्' ग.



'सरस्वती स्वादु तदर्थवस्तु निःष्यन्दमाना महतां कवीनाम् ।
अलोकसामान्यमभिव्यनक्ति प्रतिस्फुरन्तं प्रतिभाविशेषम् ॥ ६ ॥'

वस्तुतत्त्वं निःष्यन्दमाना महतां कवीनां [सरस्वती] लोकासामान्यं प्रतिभाविशेषं परिस्फुरन्तमभिव्यनक्ति । येनास्मिन्नतिविचित्रकविपरम्परावाहिनि संसारे कालिदासप्रभृतयो द्वित्राः पञ्चषा वा महाकवय इति गण्यन्ते ।

इदं चापरं प्रतीयमानस्यार्थस्य सद्भावसाधनं प्रमाणम्—

'शब्दार्थशासनज्ञानमात्रेणैव न वेद्यते ।
वेद्यते स हि काव्यार्थतत्त्वज्ञैरेव केवलम् ॥ ७ ॥'

---

एवमितिहासमुखेन प्रतीयमानस्य काव्यात्मतां प्रदर्श्य स्वसंवित्सिद्धमप्येतदिति दर्शयति—**सरस्वतीति** । वाग्रूपा भगवतीत्यर्थः । अर्थशब्देन वस्तुशब्दं वस्तुशब्देन तत्त्वशब्दं च वक्तुं वस्तुशब्दं व्याचष्टे—**निःष्पन्दमानेति** । दिव्यमानन्दरसं स्वयमेव प्रस्नुवानेत्यर्थः । यदाह भट्टनायकः—'वाग्धेनुर्दुग्ध एतं हि रसं यद्बालतृष्णया । तेन नास्य समः स स्याद्दुह्यते योगिभिर्हि यः ॥' तदावेशेन विनाप्याक्रान्त्या हि योगिभिर्दुह्यते । अत एव—'यं सर्वशैलाः परिकल्प्य वत्सं मेरौ स्थिते दोग्धरि दोहदक्षे । भास्वन्ति रत्नानि महौषधीश्च पृथूपदिष्टां दुदुहुर्धरित्रीम् ॥' इत्यनेन साराग्र्यवस्तुपात्रत्वं हिमवत उक्तम् । अभिव्यनक्ति प्रतिस्फुरन्तमिति । प्रतिपत्तॄन्प्रति सा प्रतिभा नानुमीयमाना, अपि तु तदावेशेन भासमानेत्यर्थः । यदुक्तमस्मदुपाध्यायभट्टतौतेन—'नायकस्य कवेः श्रोतुः समानोऽनुभवस्ततः' इति । प्रतिभा अपूर्ववस्तुनिर्माणक्षमा प्रज्ञा । तस्या विशेषो रसावेशवैशद्यसौन्दर्यकाव्यनिर्माणक्षमत्वम् । यदाह मुनिः—'कवेरन्तर्गतं भावं' इति । **येनेति** । अभिव्यक्तेन स्फुरता प्रतिभाविशेषेण निमित्तेन महाकवि[त्व]गणनेति यावत् ।

**इदं चेति** । न केवलं 'प्रतीयमानं पुनरन्यदेव' इत्येतत्कारिकासूचितौ स्वरूपविषयभेदावेव, यावद्भिन्नसामग्रीवेद्यत्वमपि वाच्यातिरिक्तत्वे प्रमाणमिति यावत् । **वेद्यत**

---

१. 'अलोकसाम्यं प्रतिभाविशेषं परिस्फुरन्तं समभिव्यनक्ति' क-ख. २. 'वस्तुतत्त्वं' इत्यारभ्य 'व्यनक्ति' इतिपर्यन्तं क-ख-पुस्तकयोर्नास्ति. ३. 'इयति' क-ख. ४. 'इति' ग-पुस्तके नास्ति. ४. 'तु' ग.

---

१. 'स च संवित्' ग. २. 'वस्तुशब्देनार्थशब्दं तत्त्वशब्देन च वस्तुशब्दं' ग. ३. 'यथा' ग. ४. 'एवं' क-ख. ५. 'यद्बाल' ग. ६. भास्वन्तीत्युत्तरार्धं क-ख-पुस्तकयोर्नास्ति. ७. 'परिस्फुरन्तं' क-ख. ८. 'प्रतिभानुमीया नापि तद्विलेशेन' ग. ९. 'यथोक्तमस्मदुपाध्यायेन भट्टलोल्लटेन' ग. १०. 'वैशारद्यसौन्दर्य' क-ख. ११. 'एवं' क-ख.

शब्दार्थशासनज्ञानमात्रेऽपि परं न वेद्यते सोऽर्थो यस्मात्केवलं काव्यार्थतत्त्वज्ञैरेव ज्ञायते। यदि च[1] वाच्यरूप [2]एवासावर्थः स्यात्[3]तद्वाच्य[4]वाचकस्वरूपपरिज्ञानादेव तत्प्रतीतिः स्यात्। अथ च वाच्यवाचकलक्षणमात्रकृतश्रमाणां [5]काव्यतत्त्वार्थभावनाविमुखानां स्वरश्रुत्यादि[6]र्लक्षणमिव प्रगीतानां गान्धर्वलक्षणविदामगोचर एवासावर्थः।

एवं वाच्यव्यतिरेकिणो [7]व्यङ्ग्यस्य सद्भावं प्रतिपाद्य प्राधान्यं तस्यैवेति [8]प्रतिपादयति—

**'सोऽर्थस्तद्व्यक्तिसामर्थ्ययोगी शब्दश्च कश्चन।**
**यत्नतः प्रत्यभिज्ञेयौ तौ शब्दार्थौ महाकवेः ॥ ८ ॥'**

---

**इति**। न तु न वेद्यते, येन न स्यादसाविति भावः। काव्यतत्त्वभूतो योऽर्थस्तस्य भावना वाच्यातिरेकेणानवरतचर्वणा तत्र विमुखानाम्। स्वराः षड्जादयः सप्त। श्रुतिर्नाम शब्दस्य वैलक्षण्य[1]मात्रकारि यद्रूपान्तरं [2]तत्परिणामानां स्वरतदन्तरालोभयभेदकल्पिता द्वाविंशतिविधा। [3]आदिशब्देन जात्यंशकग्रामरागभाषाविभाषान्तरभाषा देशीमार्गौ गृह्यन्ते। प्रकृष्टं गीतं गानं येषां ते, प्रगीता गातुं वा प्रारब्धा इत्यादिकर्मणिः क्तः। प्रारम्भेण चात्र [4]फलपर्यन्तता लक्ष्यते।

**एवमिति**। [5]स्वरूपविषयभेदेन भिन्नसामग्रीज्ञेयत्वेन चेत्यर्थः। प्रत्यभिज्ञेयावित्यर्हार्थे कृत्यः। सर्वोऽपि हि तथा यतते इतीयता प्राधान्ये लोक[6]प्रसिद्धत्वं प्रमाणमुक्तम्। नियोगार्थेन च कृत्येन शिक्षाक्रम उक्तः। प्रत्यभिज्ञेयशब्देनेदमाह—'काव्यं तु जातु जायेत कस्यचित्प्रतिभावतः' इति नयेन यद्यपि स्वयमस्यैव तत्[7]परिस्फुरति तथापीदमितीत्थमिति विशेषतो निरूप्यमाणं सहस्रशाखीभवति। [8]यदुक्तमस्मत्परमगुरुभिः श्रीमदुत्पलपादैः—'तैस्तैरप्युपयाचितैरुपनतस्तन्व्याः स्थितोऽप्यन्तिके कान्तो लोकसमान एवमपरिज्ञातो न रन्तुं यथा। लोकस्यैष तथानवेक्षित[9]गुणः स्वात्मापि विश्वेश्वरो नैवालं निजवैभवाय तदियं तत्प्रत्यभिज्ञोदिता ॥' इति। तेन ज्ञातस्यापि विशेषतो नि[10]रूपणमनुसंधानात्मकमत्र प्रत्यभिज्ञानम्। न तु तदेवेदमित्येतावन्मात्रम्। **महाकवेरिति**। यो

---

१. 'च' क-ख-पुस्तकयोर्नास्ति. २. 'एवास्यार्थः' ग. ३. 'तत्' क-पुस्तके नास्ति. ४. 'वाचकरूप' ग. ५. 'काव्यार्थतत्त्व' क-ख. ६. 'स्वलक्षण' ग. ७. 'व्यङ्ग्यस्यार्थस्य' ग. ८. 'प्रदर्शयति' ग.

---

१. 'मात्र' ग-पुस्तके नास्ति. २. 'तत्परिमाणानां' ग-पुस्तके नास्ति. ३. 'आदिग्रहणेन जात्यंशतद्ग्रामरागभाषाभाषान्तरभागा' ग. ४. 'पर्यन्तमालक्ष्यते' ग. ५. 'स्वरूपभेदेन विषयभेदेन' क-ख. ६. 'प्रसिद्धप्रमाणं' ग. ७. 'परिष्कारीति' क-ख. ८. 'यथोक्तं' ग. ९. 'गुणस्यात्मापि' ग. १०. 'निरूपणानुसंधाना' क-ख.



स व्यङ्ग्योऽर्थस्[1]तत्प्रकाशनसामर्थ्ययोगी शब्दश्च कश्चन, न[2] सर्वः। तावेव शब्दार्थौ महाकवेः प्रत्यभिज्ञेयौ। व्यङ्ग्यव्यञ्जकाभ्यामेव हि सुप्रयुक्ताभ्यां महाकवित्वलाभो महाकवीनाम्, न वाच्यवाचकरचनामात्रेण।

इदानीं व्यङ्ग्यव्यञ्जकयोः प्राधान्येऽपि यद्वाच्यवाचकावेव प्रथममुपाददते कवयस्तदपि युक्तमेवेत्याह—

**'आलोकार्थी यथा दीपशिखायां यत्नवाञ्जनः।**
**तदुपायतया तद्व[3]दर्थे वाच्ये तदादृतः ॥ ९ ॥'**

यथा ह्यालोकार्थी सन्नपि दीपशिखायां यत्नवाञ्जनो भवति तदुपायतया। नहि दीपशिखामन्तरेणालोकः संभवति। तद्वद्व्यङ्ग्यमर्थं प्रत्यादृतो [4]जनो [5]वाच्येऽर्थे यत्नवान्भवति। अनेन [6]प्रतिपादकस्य कवेर्व्यङ्ग्य[7]मर्थं प्रति व्यापारो दर्शितः।

प्रतिपाद्यस्यापि तं दर्शयितुमाह—

**'यथा पदार्थद्वारेण वाक्यार्थः संप्रतीयते।**
**वाच्यार्थपूर्विका तद्वत्[8]प्रतिपत्तव्यवस्तुनः ॥ १० ॥'**

---

[1]महाकविरित्यहं भूयासमित्याशास्ते। एवं व्यङ्ग्यस्यार्थस्य व्यञ्जकस्य शब्दस्य च प्राधान्यं वदता व्यङ्ग्यव्यञ्जकभावस्यापि प्राधान्य[2]मुक्तमिति ध्वनति ध्वन्यते ध्वननमिति त्रितयम[3]प्युपपन्नमित्युक्तम्।

ननु प्रथमो[4]पादीयमानत्वाद्वाच्यवाचक[5]तद्भावस्यैव [6]किं न प्राधान्यमित्याशङ्क्योपायानामेव प्रथममुपादानं भवतीत्यभिप्रायेण विरुद्धोऽयं प्राधान्ये साध्ये हेतुरिति दर्शयति—**इदानीमित्यादिना**। आलोकनमालोकः। वनितावदनारविन्दावलोकनमित्यर्थः। तत्र चोपायो दीपशिखा। प्रतिपदिति भावे क्विप्। तस्य वस्तुन इति व्यङ्ग्यरूपस्य सारस्येत्यर्थः। अनेन श्लोकेनात्यन्तसहृदयो यो न भवति तस्यैष स्फुटसंवे[7]द्य एव क्रमः।

---

१. 'तद्व्यक्तिसामर्थ्य' ग. २. 'न शब्दमात्रम्' ग. ३. 'अर्थो वाच्यो' ग. ४. 'जनो' क-ख-पुस्तकयोर्नास्ति. ५. 'वाच्यार्थे' ख. ६. 'प्रतिपदिकस्य' ख. ७. 'अर्थे' क-ख-पुस्तकयोर्नास्ति. ८. 'प्रतिपन्नस्य' क-ख.

---

१. 'महाकविरहं भूयासमित्याशंसा' ग. २. 'उक्तं' ग-पुस्तके नास्ति. ३. 'उपलक्षणं' ग. ४. 'उपादेयमान' क-ख. ५. 'तद्' ग-पुस्तके नास्ति. ६. 'किं न' ग-पुस्तके नास्ति. ७. 'संवेद्यक्रमः' क-ख.

यथा हि[1] पदार्थद्वारेण वाक्यार्थावगमस्तथा[2] वाच्यार्थप्रतीतिपूर्विका व्यङ्ग्यस्यार्थस्य प्रतिपत्तिः ।

इदानीं वाच्यार्थप्रतीतिपूर्वकत्वेऽपि तत्प्रतीतेर्व्यङ्ग्यस्यार्थस्य प्राधान्यं यथा न व्यालुप्येत[3] तथा दर्शयति—

**'स्वसामर्थ्यवशेनैव वाक्यार्थं प्रथयन्नपि[4] ।**
**यथा व्यापारनिष्पत्तौ पदार्थो न विभाव्यते ॥ ११ ॥'**

यथा स्वसामर्थ्यवशेनैव वाक्यार्थं प्रकाशयन्नपि पदार्थो व्यापारनिष्पत्तौ न विभाव्यते विभक्ततया ।

**'तद्वत्सचेतसां सोऽर्थो वाच्यार्थविमुखात्मनाम् ।**
**बुद्धौ तत्त्वार्थदर्शिन्यां झटित्येव[5]वभासते ॥ १२ ॥'**

यत्रा[6](न्ना)वभासते । (?)

---

यथात्यन्तशब्दवृत्तज्ञो यो न भवति तस्य पदार्थवाक्यक्रमः।प्रतिपाद्यापि तं दर्शयितुमाह—**इदानीमित्यादिना** । काष्ठाप्राप्तसहृदयभावस्य तु वाक्यार्थवृत्त[1]कुशलस्यैव सन्नपि[2] क्रमोऽभ्यस्ताविनाभावस्मृत्यादिवदसंवेद्यः । **न व्यालुप्येतेति** । प्राधान्यादेव[3] तत्पर्यन्तानुसरणत्वरिता मध्ये विश्रान्तिं न कुर्वत इति क्रमस्य सतो[4]ऽप्यलक्षणं प्राधान्ये हेतुः । स्वसामर्थ्यमाकाङ्क्षायोग्यतासंनिधयः । **विभाव्यत इति** । विशब्देन विभक्ततोक्ता । विभक्ततया न भाव्यत इत्यर्थः । अनेन विद्यमान एव क्रमो न संवेद्यत इत्युक्तम्[5] । तेन यत्स्फोटाभिप्रायेणासन्नेव क्रम इति व्याचक्षते तत्प्रत्युत विरुद्धमेव । वाच्येऽर्थे विमुखो विश्रान्तिनिबन्धनं परितोषमलभमान आत्मा हृदयं येषामित्यनेन सचेतसामित्यस्यैवार्थो विभक्तः[6] । सहृदयानामेव तर्ह्ययं महिमास्तु, न तु काव्यस्यासौ कश्चिदतिशय इत्याशङ्क्याह[7]—**यत्रावभासत इति** । तेनात्र विभक्ततया[8] न भासते । न तु वाच्यस्यैव सर्वथानवभासः । अत एव तृतीयोद्द्योते घटप्रदीपदृष्टान्तबलाद्व्यङ्ग्यप्रतीतिकालेऽपि वाच्यप्रतीतिर्न विघटत इति वक्ष्यति[9] तेन सहास्य ग्रन्थस्य न विरोधः ।

---

१. 'हि' क-ख-पुस्तकयोर्नास्ति. २. 'वाक्यार्थस्यावगमः' ग. ३. 'व्यालुप्यते' क-ख. ४. 'प्रतिपादयन्' ग. ५. 'झगिति' ख. ६. 'यत्रावभासते' ग-पुस्तके नास्ति.

---

१. 'वाक्यवृत्त' ग. २. 'असन्नपि क्रमोऽभ्यस्तानुमाविनाभावस्मृत्यादिपदसंवेद्यः' ग. ३. 'प्राधान्यादेव रणरणिकत्वरितया' ग. ४. 'सतोपलक्षणं' क-ख. ५. 'इत्यर्थः' क-ख. ६. 'अभिव्यक्तः' ग. ७. 'इत्यत्रावभासते' ग. ८. 'विभक्तता न' क-ख. ९. 'वक्ष्यति' क-ख.



एवं वाच्यव्यतिरेकिणो व्यङ्ग्यस्यार्थस्य सद्भावं प्रतिपाद्य प्रकृत उपयोजयन्नाह—

**'यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ ।**
**व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः ॥ १३ ॥'**

यत्रार्थो वाच्यविशेषः वाचकविशेषः[1] शब्दो वा तमर्थं व्यङ्क्तः, स काव्यविशेषो ध्वनिरिति । अनेन वाच्यवाचकचारुत्वहेतुभ्य उपमादिभ्योऽनुप्रासादिभ्यश्च विभक्त एव ध्वनेर्विषय इति दर्शितम् । यदप्यु-

---

**सद्भावमिति** । सत्तां साधुभावं प्राधान्यं चेत्यर्थः । द्वयं हि प्रतिपिपादयिषितम् । प्रकृत[1] इति लक्षणे । उपयोजयन्नित्युपयोगं गमयन् । तमर्थमिति चायमुपयोगः । स्वशब्द आत्मवाची । स्वं[2] चासावर्थश्च तौ[3] स्वार्थौ । तौ[4] गुणीभूतौ याभ्याम् । यथासंख्येन तेनार्थो गुणीकृतात्मा, शब्दो गुणीकृताभिधेयः । **तमर्थमिति** । 'सरस्वती स्वादु तदर्थवस्तु' इति यदुक्तम् । व्यङ्क्तः[5] द्योतयतः । व्यङ्क्त इति द्विवचनेनेदमाह—यद्यप्यविवक्षितवाच्ये शब्द एव व्यञ्जकस्तथाप्यर्थस्यापि सहकारिता न त्रुट्यति । अन्यथा ज्ञातोऽपि शब्दस्तद्व्यञ्जकः स्यात् । विवक्षितान्यपरवाच्ये च शब्दस्यापि सहकारित्वं भवत्येव । विशिष्टशब्दाभिधेयतया विना तस्यार्थस्याव्यञ्जकत्वादिति सर्वत्र शब्दार्थयोरुभयोरपि ध्वनन[6]व्यापारः । तेन यद्भट्टनायकेन द्विवचनं दूषितं तद्गजनिमीलिकयैव । अर्थः शब्दो वेति तु विकल्पाभिधानं प्राधान्याभिप्रायेण । काव्यं च तद्विशेषश्चासौ, काव्यस्य वा विशेषः । काव्यग्रहणाद्गुणालंकारोपस्कृतशब्दार्थपृष्ठपाती ध्वनिलक्षण आत्मेत्युक्तम् । तेन[7] नैतन्निरवकाशम् श्रुतार्थापत्तावपि ध्वनिव्यवहारः स्यादिति । यच्चोक्तम्—'चारुत्वप्रतीतिस्तर्हि काव्यस्यात्मा स्यात्' इति तदङ्गीकुर्म एव । नास्ति खल्वयं विवाद इति । यथोक्तम्—'चारुणः प्रतीतिर्यदि काव्यात्मा प्रत्यक्षादिप्रमाणादपि सा भवन्ती तथा स्यात्' इति । तत्र शब्दार्थमयकाव्यात्माभिधान[8]प्रस्तावे क एष प्रसङ्ग इति न किंचिदेतत्[9] । **स इति** । अर्थो वा, शब्दो वा, व्यापारो वा । अर्थोऽपि वाच्यो वा ध्वनतीति । शब्दोऽप्येवं व्यङ्ग्यो वा ध्वन्यत इति । व्यापारो वा शब्दार्थयोर्ध्वननमिति । कारिकया तु प्राधान्येन समुदाय एव वाच्यरूपमुखतया ध्वनिरिति प्रतिपादितम्[10] । **विभक्त इति** । गुणालंकाराणां वाच्यवाचकभावप्राणत्वात् ।

---

१ 'वाचकविशेषः' क-ख-पुस्तकयोर्नास्ति.

---

१. 'पूर्वं प्रकृते' क-ख. २. 'स्वश्चासा' क-ख. ३. 'तौ' ग-पुस्तके नास्ति. ४. 'तौ गुणीभूतौ' क-ख-पुस्तकयोर्नास्ति. ५. 'व्यङ्क्तः द्योतयतः' ग-पुस्तके नास्ति. ६. 'ध्वननं' क-ख. ७. 'तेनैतत्' ग. ८. 'काव्याभिधान' ग. ९. 'कश्चित' क-ख. १०. 'प्रतिपादितः' ग.

क्तम्—'प्रसिद्धप्रस्थानातिक्रमिणो मार्गस्य काव्यत्वहानेर्ध्वनिर्नास्ति' इति, तदप्ययुक्तम् । यतो लक्षणकृतामेव स केवलं न प्रसिद्धः, लक्ष्ये तु परीक्ष्यमाणे स एव सहृदयहृदयाह्लादकारि काव्यतत्त्वम् । ततोऽन्यच्चित्रमेवेत्यग्रे दर्शयिष्यामः । यदप्युक्तम्—'कामनीयकमनतिवर्तमानस्य तस्योक्तालंकारादिप्रकारेष्वन्तर्भावः' इति, तदप्यसमीचीनम् । यतो वाच्यवाचकमात्राश्रयिणि प्रस्थाने व्यङ्ग्यव्यञ्जकसमाश्रयेण व्यवस्थितस्य ध्वनेः कथमन्तर्भावः । वाच्यवाचकचारुत्वहेतवो हि तस्याङ्गभूताः, न तु तदेकरूपा एवेति प्रतिपिपादयिष्यमाणत्वात् ।

परिकरश्लोकश्चात्र—

'व्यङ्ग्यव्यञ्जकसंबन्धनिबन्धनतया ध्वनेः ।
वाच्यवाचकचारुत्वहेत्वन्तःपातिता कुतः ॥'

ननु यत्र प्रतीयमानस्यार्थस्य वैशद्येनाप्रतीतिः स नाम मा भूद्ध्वन-

---

अस्य च तदन्यव्यङ्ग्यव्यञ्जकभावसारत्वान्नास्य तेष्वन्तर्भाव इति । अन्यत्र भावो विषयार्थः । एवं तद्व्यतिरिक्तः कोऽयं ध्वनिरिति निराकृतम् । **लक्षणकृतामेवेति** । लक्षणकारप्रसिद्धता विरुद्धो हेतुः । तत एव हि यत्नेन लक्षणीयतालक्ष्यत्वप्रसिद्धत्वमसिद्धो हेतुः । न च नृत्तगीतादिकल्पम् । तत्काव्यस्य वा क्वापि न किंचित् । **चित्रमिति** । विस्मयकृद्वृत्तादिवशात्, न तु सहृदयाभिलषणीयचमत्कारसाररसनिःष्पन्दमयमित्यर्थः । काव्यानुकारित्वाद्वा चित्रम्, लेख्यमात्रत्वाद्वा, कलमात्रत्वाद्वा । **अग्र इति** । 'प्रधानगुणभावाभ्यां व्यङ्ग्यस्यैवं व्यवस्थितम् । द्विधा काव्यं ततोऽन्यद्यत्तच्चित्रमभिधीयते ॥' इति तृतीयोद्द्योते वक्ष्यति । परिकरार्थं कारिकार्थस्याधिकावापं कर्तुं श्लोकः परिकरश्लोकः । यत्रेत्यलंकारे । **वैशद्येनेति** । चारुतया स्फुटतया चेत्यर्थः । अभिहि-

---

१. 'सहृदयाह्लादि काव्यम्' क-ख. २. 'एव' क-ख-पुस्तकयोर्नास्ति ३. 'उदितं' ग. ४. 'अप्यनति' ग. ५. 'यतो' ग-पुस्तके नास्ति. ६. 'हि' क-ख-पुस्तकयोर्नास्ति. ७. 'न त्वङ्गिरूपा' ग. ८. 'अप्यर्थस्य' ग.

---

१. 'एवं' क-ख-पुस्तकयोर्नास्ति. २. 'गीतहास्यादि' क-ख. ३. 'वा क्वापि' ग-पुस्तके नास्ति. ४. 'नृत्यादि' क-ख. ५. 'काव्यानुकारकारित्वाद्वा' ग. ६. 'व्यवस्थिते । द्विधाकाव्येऽन्ततो' ग. ७. 'च वक्ष्यते' ग.



विषयः । यत्र तु प्रतीतिरस्ति यथा समासोक्त्याक्षेपानुक्तनिमित्तविशेषोक्तिपर्यायोक्तापह्नुतिदीपकसंकरालंकारादौ तत्र ध्वनेरन्तर्भावो भविष्यतीत्यादि निराकर्तुमभिहितम् 'उपसर्जनीकृतस्वार्थौ' इति । अर्थो गुणीकृतात्मा, गुणीकृताभिधेयश्च शब्दो वा यत्रार्थान्तरमभिव्यनक्ति स ध्वनिरिति । तेषु कथं तस्यान्तर्भावः । व्यङ्ग्यप्राधान्ये हि ध्वनिः । न चैतत्समासोक्त्यादिष्वस्ति । समासोक्तौ तावत्—

'उपोढरागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम् ।
यथा समस्तं तिमिरांशुकं तया पुरोऽपि रागाद्गलितं न लक्षितम् ॥'

---

तमिति भूतप्रयोगः । आदौ व्यङ्ग इत्यस्य व्याख्यातत्वात् । **गुणीकृतात्मेति** । आत्मेत्यनेन स्वशब्दस्यार्थो व्याख्यातः । **न चैतदिति** । व्यङ्ग्यस्य प्राधान्यम् । प्राधान्यं च यद्यपि ज्ञप्तौ न चकास्ति 'बुद्धौ तत्त्वावभासिन्यां' इति नयेनाखण्डचर्वणविश्रान्तेः, तथापि विवेचकैर्जीवितान्वेषणे क्रियमाणे यदा व्यङ्ग्योऽर्थः पुनरपि वाच्यमेवानुप्राणयन्नास्ते तदा तदुपकरणत्वादेव तस्यालंकारता । ततो वाच्यादेवोपस्कृताच्चमत्कारलाभ इति । यद्यपि पर्यन्ते रसध्वनिरस्ति तथापि मध्यकक्षानिविष्टोऽसौ व्यङ्ग्योऽर्थो न रसोन्मुखीभवति स्वातन्त्र्येणापि तु वाच्यमेवार्थं संस्कर्तुं धावतीति गुणीभूतव्यङ्ग्यतोक्ता । **समासोक्ताविति** । 'यत्रोक्तौ गम्यतेऽन्योऽर्थस्तत्समानैर्विशेषणैः । सा समासोक्तिरुदिता संक्षिप्तार्थतया बुधैः ॥' इत्यत्र समासोक्तेर्लक्षणं स्वरूपहेतुर्नाम तन्निर्वचनमिति पादचतुष्टयेन क्रमादुक्तम् । उपोढो रागः सांध्योऽरुणिमा प्रेम च येन । विलोलास्तारका ज्योतींषि नेत्रत्रिभागश्च यत्र । तथेति झटित्येव प्रेमरभसेन गृहीतमाभासितं परिचुम्बितुमाक्रान्तं च । निशाया मुखं प्रारम्भो वदनकोकनदं चेति । यथेति यथा झंटिति ग्रहणेन प्रेमरभसेन च तिमिरं चांशुकं सूक्ष्मा अंशवस्तिमिरांशुकं रश्मिशबलीकृतं तमःपटलं तिमिरांशुकं नीलजालिका । नवोढा प्रौढवधूरुदिता (?) । रागाद्रक्तत्वात् संध्याकृताद्रागात् तदनन्तरं प्रेमरूपाच्च हेतोः । पुरोऽपि पूर्वस्यां दिशि अग्रे च । गलितं प्रशान्तं पतितं च । तया रात्र्या करणभूतया समस्तं मिश्रितं उपलक्षणत्वेन वा न लक्षितं रात्रिप्रारम्भोऽसाविति न ज्ञातम् । तिमिरसंवलितांशुदर्शने हि रात्रिमुखमिति लोकेन लक्ष्यते । न तु स्फुट आलोके । नायिकापक्षे तु तयेति कर्तृपदम् । रात्रिपक्षे

---

१. 'पर्यायापह्नुति' ग. २. 'संकरादौ' ग. ३. 'तत्र तत्र' ग. ४. 'पुरो विरागात्' ग.

---

१. 'ज्ञप्तौ यद्यपि' क-ख. २. 'इति तु' ग. ३. 'वाच्यादेव तदुपसंस्कृतात्' ग. ४. 'मध्यमकक्ष्याविनिविष्टो' ग. ५. 'यत्रोक्ते' ग. ६. 'सोऽर्थः' ग. ७. 'यथा' ग. ८. 'त्रिभागा वा' ग. ९. झगित्येव' ख. १०. 'झगिति' ख. ११. 'रसत्वात्' क-ख. १२. 'कृतात्' क-ख-पुस्तकयोर्नास्ति. १३. 'क्षालितम्' क-ख.

इत्यादौ व्यङ्ग्येनानुगतं वाच्यमेवं प्राधान्येन प्रतीयते । समारोपितनायिकानायकव्यवहारयोर्निशाशशिनोरेव वाक्यार्थत्वात् ।

आक्षेपेऽपि व्यङ्ग्यविशेषाक्षेपिणो[3] वाच्यस्यैव चारुत्वम् । प्राधान्येन वा[4]क्यार्थ आक्षेपोक्तिसामर्थ्यादेव ज्ञायते । तत्र[5] शब्दोपारूढरूपो विशे-

---

तु[1] अपि शब्दो लक्षितमित्यस्यानन्तरः । अत्र च नायकेन पश्चाद्गतेन चुम्बनोपक्रमे पुरो नीलांशुकस्य गलनं पतनम् । यदि वा पुरोऽग्रे नायकेन तथा गृहीतं मुखमिति संबन्धः । तेनात्र[2] व्यङ्ग्ये प्रतीतेऽपि न प्राधान्यम् । ततोऽपि नायकव्यवहारो निशाशशिनावेव शृङ्गारविभावरूपौ संस्कुर्वाणोऽलंकारतां[3] भजते । ततस्तु वाच्याद्विभावीभूताद्रसनिःष्पन्दः । यस्तु व्याचष्टे—'तया निशयेति कर्तृपदम् । न चाचेतनायाः कर्तृत्वमुपपन्नमिति शब्देनैवात्र नायकव्यवहार उन्नीतो[4]ऽभिधेय एव, न व्यङ्ग्य इत्यत एव समासोक्तिः' इति । स प्रकृतार्थमेव ग्रन्थार्थमत्यजत् । **व्यङ्ग्येनानुगतमिति** । एकदेशविवर्ति चेत्थं रूपकं स्यात् । 'राजहंसैरवीज्यन्त शरदैव[5] सरोनृपाः' इतिव[6]त् । न तु समासोक्तिः । तुल्यविशेषणाभावाद्गम्यत इति चानेनाभिधाव्यापारनिरासात् । इत्यलमवान्तरेण बहुना । नायिकाया नायके यो व्यवहारः स निशायां समारोपितः । नायिकायां नायकस्य यो व्यवहारः स शशिनि समारोपित इति व्याख्याने न[7] कोऽपि दोषप्रसङ्गः । **आक्षेप इति** । 'प्रतिषेध इवेष्टस्य यो विशेषाभिधित्सया । वक्ष्यमाणोक्तविषयः स आक्षेपो द्विधा मतः ॥' तत्राद्यो यथा—'अहं त्वां यदि नेक्षेय क्षणमप्युत्सुका ततः । इयदेवास्त्वतोऽन्येन किमुक्तेनाप्रियेण[8] ते ॥' इति वक्ष्यमाणमरणविषयो निषेधात्माक्षेपः । तत्रे[9]यदस्त्वित्येतदेवात्र म्रिये इत्याक्षिप्तसचारुत्वनिबन्धनमित्याक्षेप्येणाक्षेपमलंकृतं सत्प्र[10]धानम् । उक्तविषयस्तु यथा ममैव[11]—'भो भोः किं किमकाण्ड एव पतितस्त्वं पान्थ कान्या गतिस्तत्तादृक्तृषितस्य मे खलमतिः[12] सोऽयं जलं गूहते । अस्थानोपनतामकालसुलभां तृष्णां प्रति क्रुध्य[13] भोस्त्रैलोक्यप्रथितप्रभावमहिमा मार्गः पु-

---

१. 'एव' क-ख-पुस्तकयोर्नास्ति. २. 'हि' क-ख. ३. 'क्षेपिणोऽपि' ग. ४. 'वाच्यार्थ' ग. ५. 'तथाहि तत्र हि' ग.

---

१. 'तु' क-ख-पुस्तकयोर्नास्ति. २. 'तेनाप्यत्र' ग. ३. 'संस्कुर्वाणावलंकारतां' ग. ४. 'आनीतो' क-ख. ५. 'शरदीव' क-ख. ६. 'वत्' ग-पुस्तके नास्ति. ७. 'न एकशेषप्रसङ्गः' ग. ८. 'प्रियेण' क-ख. ९. 'यत इयदस्तु इत्येतदेवात्र म्रियत इत्यस्याक्षेपकं सत्' ग. १०. 'सत्त्वप्रधानम्' ग. ११. 'ममैव' ग-पुस्तके नास्ति. १२. 'जडमतिः' ग. १३. 'क्रुध्यतः' क-ख.



षाभिधानेच्छया प्रतिषेधरूपो य आक्षेपः स एव व्यङ्ग्यविशेषमाक्षिपन्मुख्यं काव्यशरीरम् । चारुत्वोत्कर्षनिबन्धना[1] हि वाच्यव्यङ्ग्ययोः प्राधान्यविवक्षा । यथा—

'अनुरागवती संध्या दिवसस्तत्पुरःसरः ।
अहो दैवगतिः की[2]दृक्तथापि न समागमः ॥'

अत्र सत्यामपि व्यङ्ग्यप्रतीतौ वाच्यस्यैव चारुत्वमुत्कर्षवदिति तस्यैव प्राधान्यविवक्षा ।

---

नर्मारवः ॥' अत्र कश्चित्सेवकः प्राप्य[1]मस्मात्किमिति न प्रतिलभे[2] इत्यन्तर्विषद्यमानहृदयः केनचिद्विडम्बनाक्षेपेण प्रतिबोध्यते । तत्राक्षेपेण निषेधरूपेण वाच्यस्यैवासत्पुरुषसेवार्ते[3]र्वैफल्यकृतोद्विग्नात्मनः शान्तरसस्थायिभूतनिर्वेदविभावानुभावरूपतया चमत्कृतित्वम् । वामनस्य तु 'उपमानाक्षेपः' इत्याक्षेपलक्षणम् । उपमानस्य चन्द्रादेराक्षेपः । 'अस्मिन्सति किं त्वया कृतम्' इति । यथा—'तस्यास्तन्मुखमस्ति सौम्यसुभगं किं पार्वणेनेन्दुना सौन्दर्यस्य पदं दृशौ यदि च[4] तैः किं नाम नीलोत्पलैः । किं वा कोमलकान्तिभिः किसलयैः सत्येव तत्राधरे हे यान्तः(धातः) पुनरुक्तवस्तुरचनारम्भेष्वपूर्वो ग्रहः ॥' अत्र व्यङ्ग्योऽप्युपमार्थो वाच्यस्यैवोपस्कुरुते किं तेन कृत्यमिति । अपह्स्तनारोप(?) आक्षेपो वाच्य एव चमत्कारकारणम् । यदि वोपमानस्याक्षेपः सामर्थ्यादाकर्षणम् । यथा—'ऐन्द्रं धनुः पाण्डुपयोधरेण शरद्दधानार्द्रनखक्षताभम् । प्रसादयन्ती सकलङ्कमिन्दुं तापं रवेरभ्यधिकं चकार ॥' इत्यत्रेर्ष्याकलुषितनायिकान्तरमुपमानमाक्षिप्तमपि वाच्यार्थमेवालंकरोतीत्येषा[5] समासोक्तिरेव । तदाह—**चारुत्वोत्कर्षेति** । अत्रैव प्रसिद्धं दृष्टान्तमाह—**अनुरागवतीति** । तेना[6]क्षेपेण प्रमेयसमर्थनमेव परिसमाप्तमिति मन्तव्यम् । तत्रो[7]दाहरणेन समासोक्तिश्लोकः पठितः । अहो दैवगतिः कीदृगिति । गुरुपारतन्त्र्यादिनिमित्तोऽसमागम इत्यर्थः । **तस्यैवेति** । वाच्यस्यैवेति यावत्[8] । वामनाभिप्रायेणायमाक्षेपः । भामहाभिप्रायेण तु[9] समासोक्तिरित्ये[10]यमुमाशयं हृदये गृहीत्वा समासोक्त्याक्षेपयोरिदमेक[11]मेवोदाहरणं व्यतरद्ग्रन्थकृत् । एषो[12]पि समासोक्तिर्वास्तु आक्षेपो[13] वा । किमनेनास्माकम् । सर्वथा[14]लंकारादिषु व्यङ्ग्यं वाच्ये गुणीभवतीति नः साध्यमित्यत्राशयोऽत्र ग्रन्थेऽस्मद्[15]गुरुभिर्निरूपितः ।

---

१. 'निबन्धनाभिदा' ग. २. 'चित्रा' क-ख-ग.

---

१. 'प्राप्तः प्राप्तव्यं' ग. २. 'लभे इति प्रत्याशाविशस्यमानहृदयः' ग. ३. 'तद्वैफल्यतः' क-ख. ४. 'ते' ग. ५. 'इति । एषा तु' ग. ६. 'तेनाक्षेपप्रमेयसमर्थनमेवापरि' ग. ७. 'तत्र तूदाहरणत्वेन' ग. ८. 'तावत्' क-ख. ९. 'तु' क-ख-पुस्तकयोर्नास्ति. १०. 'अमुं' ग-पुस्तके नास्ति. ११. 'युक्त्यैवेदमेकं' ग. १२. 'अपि' ग-पुस्तके नास्ति. १३. 'आक्षेपोक्तिर्वा' ग. १४. 'समासोक्त्यादिषु सिद्धालंकारेषु' ग. १५. 'अस्मद्' क-ख-पुस्तकयोर्नास्ति.

यथा च दीपकापह्नुत्यादौ व्यङ्ग्यत्वेनोपमायाः प्रतीतावपि प्राधान्येनाविवक्षितत्वान्न तया व्यपदेशस्तद्वदत्रापि द्रष्टव्यम् । अनुक्तनिमित्तायामपि विशेषोक्तौ—

'आहूतोऽपि सहायैरे[1]मीत्युक्त्वा विमुक्तनिद्रोऽपि ।
गन्तुमना अपि पथिकः संकोचं नैव शिथिलयति ॥'

इत्यादौ व्यङ्ग्यस्य प्रकरणसामर्थ्यात्प्रतीतिमात्रम् । न तु त[2]त्प्रती-

---

एवं प्राधान्यविवक्षायां दृष्टान्तमुक्त्वा व्यपदेशो[1]ऽपि प्राधान्यकृत एव भवतीत्यत्र दृष्टान्तं स्वपरप्र[2]सिद्धमाह—**[3]यथा चेति । उपमाया इति ।** उपमानोपमेयभावस्येत्यर्थः । तयेत्युपमया । दीपके हि 'आदिमध्यान्तविषयं त्रिधा दीपकमिष्यते' इति लक्षणम् । त[4]त्र दीपकेनैव शोभा यथा—'मणिः शाणोल्लीढः समरविजयी हेतिदलितः कलाशेषश्चन्द्रः सुरतमृदिता बाल[5]ललना । मदक्षीणो नागः शरदि सरिदाश्यानपुलिना तनिम्ना शोभन्ते गलितविभवाश्चार्थिषु [6]जनाः ॥' इत्यत्र दीपककृतमेव चारुत्वम् । 'अपह्नुतिरभीष्टस्य किंचिद[7]न्तर्गतोपमा' [8]इति । त[9]त्रापह्नुत्यैव शोभा यथा—'नेयं विरौति भृङ्गाली मदेन मुखरा मुहुः । अयमाकृष्यमाणस्य कंदर्पधनुषो ध्वनिः ॥' इति । एवमाक्षेपं विचार्योद्देशक्रमेणैव प्रमेयान्तरमाह—**अनुक्तनिमित्तायामिति ।** 'एकदेशस्य वि[10]गमे या गुणान्तरसंस्तुतिः । विशेषप्रथनायासौ विशेषोक्तिरिति स्मृता ॥' यथा—'स एकस्त्रीणि जयति जगन्ति कुसुमायुधः । हरतापि तनुं यस्य शंभुना न हृतं बलम् ॥' इयं चाचिन्त्यनिमित्तेति नास्यां व्यङ्ग्यस्य सद्भावः । उक्तनिमित्ताया[11]मपि व[12]स्तुस्वभावमात्रे तु पर्यवसानमिति त[13]त्रापि न व्यङ्ग्यसद्भावशङ्का । यथा—'कर्पूर इव दग्धोऽपि शक्तिमान्यो जने जने । नमोऽस्त्ववार्यवीर्याय तस्मै कुसुमधन्वने ॥' तेन प्रकारद्वयमवधार्य तृतीयं प्रकारमाशङ्कते—(अनुक्तनिमित्तायामपीति ।) **व्यङ्ग्यस्येति ।** शीतकृता खल्वार्तिरत्र निमित्तमिति भट्टोद्भटः । तदभिप्रायेणाह—न त्वत्र काचि[14]च्चारुत्वनिष्पत्तिः इति । यत्तु रसिकैरपि निमित्तं कल्पितम्—'कान्तासमागमे [15]लघुतरमुपायं स्वप्नं मन्यमानो निद्राग-

---

१. 'ओमित्युक्त्वा' ग. २. 'तत्' क-ख-पुस्तकयोर्नास्ति.

---

१. 'अपि' क-ख-पुस्तकयोर्नास्ति. २. 'सिद्धं' क-ख. ३. 'यथा चैतद्रूपाया इति' ग. ४. 'तत्र दीपकेनैव शोभा' ग-पुस्तके नास्ति. ५. 'वनिता' ग. ६. 'नराः' ग. ७. 'अन्तगता' ग. ८. 'इति' क-ख-पुस्तकयोर्नास्ति. ९. 'तत्रापह्नवेनैव' ग. १०. 'निगमे' क-ख. ११. 'अपि' ख-पुस्तके नास्ति. १२. 'वस्तुस्वभावे पर्यवसितम्' ग. १३. 'तथापि' क-ख. १४. 'चारुत्वहानिः' क-ख. १५. 'न मनागपि लघुतर' क-ख.



तिनिमित्ता काचिच्चारुत्वनिष्पत्तिरिति न प्राधान्यम् । पर्यायोक्तेऽपि यदि प्राधान्येन व्यङ्ग्यत्वं तद्भवतु [1]नाम तस्य ध्वनावन्तर्भावः । न तु ध्वनेस्तत्रान्तर्भावः । तस्य महाविषयत्वेनाङ्गित्वेन च प्रतिपिपादयिष्यमाणत्वात् । न पुनः पर्यायोक्ते भामहोदाहृतसदृशे व्यङ्ग्यस्यैव प्राधान्यम् । वा-

---

मनबुद्ध्या संकोचं नात्यजत्' इति तदपि निमित्तं चारुत्वहेतुतया नालंकारकृद्भिः कल्पितम् । अपि तु विशेषोक्तिभाग एव न शिथिलयतीति । एवंभूतो[1]ऽभिव्यज्यमाननिमित्तोपस्कृतश्चारुत्वहेतुः । अन्यथा तु विशेषोक्तिरेवेयं न भवेत् । एवमभिप्रायद्वयमपि साधारणोक्त्या ग्रन्थकृन्न्यरूपयत् । न त्वौद्भटेनैवाभिप्रायेण ग्रन्थो व्यवस्थित इति मन्तव्यम् । **पर्यायोक्तेऽपीति ।** 'पर्यायोक्तं यदन्येन प्रकारेणाभिधीयते । वाच्यवाचकवृत्तिभ्यां शून्येनावगमात्मना ॥' इति लक्षणम् । यथा—'शत्रुच्छेददृढेच्छस्य मुनेरुत्पथगामिनः । रामस्यानेन धनुषा देशिता धर्मदेशना ॥' इति । अत्र भीष्मस्य भार्गवप्रभावाभिभावी प्रताप इति यद्यपि प्रतीयते तथापि तत्सहायेन दे[2]शिता धर्मदेशनेत्यभिधीयमानेनैव [3]वाक्यार्थोऽलंकृतः । अत एव पर्यायेण प्रकारान्तरेणावगमात्मना व्यङ्ग्येनोपलक्षितं स[4]द्यदभिधीयते तदभिधीयमानमुक्तमेव सत्पर्यायोक्तमेवाभिधीयत इति लक्षणपदम्, पर्यायोक्तमिति लक्ष्यपदम्, अर्थालंकारत्वं सामान्यलक्षणं [5]चेति सर्वं युज्यते । यदि त्वभिधीयते इत्यस्य बलाद्व्याख्यानमभिधीयते प्रतीयते प्रधानतयेति, उदाहरणं च 'भम धम्मिअ—' इत्यादि । तदालंकारत्वमेव दूरे संपन्नम् । आत्मतायां पर्यवसानात् । [6]तथा चालंकारमध्ये गणना न कार्या । भेदान्तराणि चास्य वक्तव्यानि । तदाह—**यदि प्राधान्येनेति । ध्वनाविति ।** [7]आत्मन्यन्तर्भावादात्मैवासौ नालंकारः स्यादित्यर्थः । **[8]तत्रेति ।** यादृशो[9]ऽलंकारत्वेन विवक्षितस्तादृशे ध्वनिर्नान्तर्भवति । न तादृगस्माभिर्ध्वनिरुक्तः । ध्वनिर्हि महाविषयः सर्वत्रभावाद्व्यापकः समस्तप्रतिष्ठास्थानत्वाच्चाङ्गी । न [10]चालंकारो व्यापकोऽन्यालंकारवत् । न चाङ्गी । अलंकार्यतन्त्रत्वात् । अथ [11]व्यापकत्वाङ्गित्वे तस्योपगम्येते, त्यज्यते चालंकारता त[12]र्ह्यस्मन्नय एवायमवलम्बते । केवलं मात्सर्यग्रहात्पर्यायोक्तभागिति भावः । न चे[13]यदपि प्राक्तनैर्दृष्टमपि त्वस्माभिरेवोन्मीलितमिति दर्शयति—**न पुनरिति ।** भामहस्य यादृक्तदीयं रूपमभिमतं तादृगुदाहरणेन दर्शितम् । त[14]त्रापि नैव व्यङ्ग्यस्य प्राधान्यम् । चारुत्वाहेतुत्वात् । तेन तदनुसारितया तत्सदृशं यदुदाहरणान्तरमपि कल्प्यते तत्र नैव व्यङ्ग्यस्य प्राधान्यमिति संगतिः । यदि तु त-

---

१. 'नाम' ग-पुस्तके नास्ति.

---

१. 'विभज्यमान' क-ख. २. 'दर्शिता' ग. ३. 'काव्यार्थो' ग. ४. 'यद्यदभि' ग. ५. 'च' गपुस्तके नास्ति. ६. 'तदा' क-ख. ७. 'आत्मनि' क-ख-पुस्तकयोर्नास्ति. ८. 'तत्रेति' ग-पुस्तके नास्ति. ९. 'तादृशो' ग. १०. 'न वा' ग. ११. 'व्यापकाङ्गित्वे' ग. १२. 'लम्भ्यते न केवलं' क-ख. १३. 'चेदमपि' ग. १४. 'तत्र चैव न' क-ख.

च्यस्य तत्रोपसर्जनीभावेनाविवक्षितत्वात् । अपह्नुतिदीपकयोः पुनर्वाच्यस्य प्राधान्यं व्यङ्ग्यस्यानुयायित्वं प्रसिद्धमेव । संकरालंकारेऽपि यदालं-

---

दुक्तमुदाहरणमनादृत्य 'भम धम्मिअ' इत्याद्युदाह्रियते तदस्मच्छिष्यतैव । केवलं तन्नयमवलम्ब्यापवरणेनात्मसंस्कार इत्यनार्यचेष्टितम् । यदाहुरैतिहासिकाः—'अवज्ञयाप्यवच्छाद्य शृण्वन्नरकमृच्छति' इति । भामहेन ह्युदाहृतम्—'गृहेष्वध्वसु वा नान्नं भुञ्ज्महे यदधीतिनो । विप्रा न भुञ्जते' इति । एतद्धि भगवद्वासुदेववचनं पर्यायेण रसदानं निषेधयति । यत्स एवाह—'तच्च रसदाननिवृत्तये' इति । न चास्य रसदाननिषेधस्य व्यङ्ग्यस्य किंचिच्चारुत्वमस्ति येन प्राधान्यं शङ्क्येत । अपि तु तद्व्यङ्ग्योपोद्बलितं विप्रभोजनेन विना यदन्नभोजनं तदेवोक्तप्रकारेण पर्यायोक्तं सत्प्राकरणिकं भोजनार्थमलंकुरुते । तेन ह्यस्य निर्विषं भोजनं त्विति विवक्षितमिति पर्यायोक्तमलंकार एवेति चिरंतनानामभिमत इति तात्पर्यम् । **अपह्नुतिदीपकयोरिति** । एतत्पूर्वमेव निर्णीतम् । अत एवाह—**प्रसिद्धमिति** । प्रतीतं प्रसाधितं चे प्रमाणितं चेत्यर्थः । पूर्वं चैतदुपमादिव्यपदेशभाजनम् । एतद्यथा न भवतीत्यमुया छायया दृष्टान्ततयोक्तमप्युद्देशानुक्रमपूरणाय ग्रन्थशय्यां योजयितुं पुनरप्युक्तम्—'व्यङ्ग्यं प्राधान्याभावान्न ध्वनिः' इति । छायान्तरेण वस्तु पुनरेकमेव । उपमाया एव व्यङ्ग्यत्वेन ध्वनित्वाशङ्कनात् । यत्तु विवरणकृत्—दीपकस्य सर्वत्रोपमान्वयोऽस्तीति बहुनोदाहरणप्रपञ्चेन विचारितवांस्तदनुपयोगि नितरां सप्रतिक्षेपं च । 'मदो जनयति प्रीतिं सानङ्गं मानभङ्गुरम् । स प्रियासंगमोत्कण्ठां सासह्यां मनसः शुचम् ॥' इति । अत्राप्युत्तरोत्तरजन्यत्वेऽप्युपमानोपमेयभावस्य सुकल्पत्वात् । नहि क्रमिकाणां नोपमानोपमेयभावः । तथाहि—'राम इव दशरथोऽभूद्दशरथ इव रघुरजोऽपि रघुसदृशः । अज इव दिलीपवंशश्चित्रं रामस्य कीर्तिरियम् ॥' इति । नतु भवति तस्मात्क्रमिकत्वम् । समं वा प्राकरणिकत्वमुपमां निरुणद्धीति कोऽयं त्रासः । इत्यलं गर्दभीदोहानुवर्तनेन । **संकरालंकारेऽपीति** । 'विरुद्धालंक्रियोल्लेखे समं तद्वृत्त्यसंभवे । एकस्य च ग्रहे न्यायदोषाभावेऽपि संकरः ॥' इति लक्षणादेकः प्रकारः । यथा ममैव—'शशिवदनासितसरसिजनयना सितकुन्ददशनपङ्क्तिरियम् । गगनजलस्थलसंभवहृद्याकारा कृता विधिना ॥' इति ।

---

१. 'म्व्यार्धश्रवणे' क-ख. २. 'ऽप्युदाहृतं' क-ख. ३. 'नह्यस्य निर्विशेषं भोजनं भवत्विति विवक्षितम्' क, 'भवतीति विवाक्षितम्' ख. ४. 'प्रमाणितं' क-ख-पुस्तकयोर्नास्ति. ५. 'उद्देश्यक्रम' क-ख. ६. 'उदाहरणादेः' क-ख. ७. 'विस्तारितवान्' क-ख. ८. 'निःसारं' ग. ९. क-ख-पुस्तकयोरस्मात्पूर्वम् 'अत्र हेतुमाह मद इत्यादि सुकल्पत्वादित्यन्तम् ।' इत्यधिकमस्ति. १०. 'जन्यत्वेन' क-ख. ११. 'विकल्प' ग. १२. 'वृत्त्यसं' ग. १३. 'ग्रहोन्याय' ग. १४. 'च' ग.



कारोऽलंकारान्तरच्छायामनुगृह्णाति, तदा व्यङ्ग्यस्य प्राधान्येनाविवक्षितत्वान्न ध्वनिविषयत्वम् । अलंकारद्वयसंभावनायां तु वाच्यव्यङ्ग्ययोः समं प्राधान्यम् । अथ वाच्योपसर्जनीभावेन व्यङ्ग्यस्य तत्रापि व्यवस्थानं तदा सोऽपि ध्वनिविषयोऽस्तु । न तु स एव ध्वनिरिति वक्तुं शक्यम् ।

---

अत्र शशी वदनमस्याः तद्वद्वा वदनमस्या इति रूपकोपमोल्लेखाद्युगपद्द्वयासंभवादेकतरपक्षत्यागग्रहणे प्रमाणाभावात्संकर इति व्यङ्ग्यवाच्यताया एवानिश्चयात्काध्वनिसंभावना । योऽपि द्वितीयः प्रकारः—शब्दार्थालंकाराणामेकीभाव इति तत्रापि प्रतीयमानस्य का शङ्का । यथा—'स्मर स्मरमिव प्रियं रमयसे यदालिङ्गनात्' इति । अत्रैव यमकमुपमा च । तृतीयः प्रकारः—यत्रैकवाच्यांशेऽनेकोऽर्थालंकारस्तत्रापि द्वयोः साम्यात्कस्य व्यङ्ग्यता । यथा—'तुल्योदयावसानत्वाद्गतेऽस्तं प्रति भास्वति । वासाय वासरः क्लान्तो विशतीव तमोगुहाम् ॥' इति । अत्र हि स्वामिविपत्तिसमुचितव्रतग्रहणहेवाकिकुलपुत्रकरूपणमेकदेशविवर्तिरूपकं दर्शयति । उत्प्रेक्षा चेवशब्देनोक्ता । तदिदं प्रकारद्वयमुक्तम्, 'शब्दार्थवृत्त्यालंकारा वाक्य एकत्र भाविनः । संकरश्चैकवाक्यांशप्रवेशाद्वाभिधीयते ॥' इति च । चतुर्थस्तु प्रकारः यत्रानुग्राह्यानुग्राहकभावोऽलंकाराणाम् । यथा 'प्रवातनीलोत्पलनिर्विशेषमधीरविप्रेक्षितमायताक्ष्या । तया गृहीतं नु मृगाङ्गनाभ्यस्ततो गृहीतं नु मृगाङ्गनाभिः ॥' अत्र मृगाङ्गनावलोकनेन तदवलोकनस्योपमा यद्यपि व्यङ्ग्या, तथापि वाच्यस्य सा संदेहालंकारस्याभ्युत्थानकारिणीत्वेनानुग्राहकत्वाद्गुणीभूता । अनुग्राह्यत्वेन हि संदेहे पर्यवसानम् । यथोक्तम्—'परस्परोपकारेण यत्रालंकृतयः स्थिताः । स्वातन्त्र्येणात्मलाभं नो लभन्ते सोऽपि संकरः ॥' तदाह—यदालंकार इत्यादि । एवं चतुर्थेऽपि प्रकारे ध्वनिता निराकृता । मध्यमयोस्तु व्यङ्ग्यसंभावनैव नास्तीत्युक्तम् । अद्यो तु प्रकारे शशिवदनेत्याद्युदाहृते कथंचिदस्ति संभावनेत्याशङ्क्य निराकरोति—**अलंकारद्वयेति** । **सममिति** । द्वयोरप्यान्दोल्यमानत्वादिति भावः । ननु यत्र व्यङ्ग्यमेव प्राधान्येन भाति तत्र किं कर्तव्यम् । यथा 'होइ ण गुणाणुराओ खलाणँ णवरं पसिद्धिसरणाणम् । किर पहिणुसइससिमणं चन्देण पिआमुहे दिट्ठे ॥' अत्रार्थान्तरन्यासस्तावद्वाच्यत्वेनाभाति, व्यतिरेकापह्नुती तु व्यङ्ग्यत्वेन प्रधानतयेत्यभिप्रायेणाशङ्कते—**अथेति** । तत्रोत्तरम्—**तदा सोऽपीति** । संकरालंकार एवायं न भवति, अपि त्वलंकारध्वनि-

---

१. 'तत्रावस्थानं' ग.

---

१. 'ग्रहे' ग. २. 'एकत्र भासत इति' ग. ३. 'न रमसे' क-ख. ४. 'यत्रैकत्र वाक्यांशे' क-ख. ५. 'एकस्य' क-ख. ६. 'कान्तो' क-ख. ७. 'वर्त्यलंकारा' क-ख. ८. 'वर्तिनः' ग. ९. 'वैक' क-ख. १०. 'प्रवेशश्च' ग. ११. 'अलंकारध्वनिनामायं' ग-पुस्तके नास्ति.

पर्यायोक्तनिर्दिष्टन्यायात् । अपि च संकरालंकारस्य संकरोक्तिरेव ध्वनिसंभावनां करोति । अप्रस्तुतप्रशंसायामपि यदा सामान्यविशेषभावान्निमित्तनिमित्तिभावाद्वाभिधेयप्रतीयमानयोः सममेव प्राधान्यम् । यदा

नामायं ध्वनेर्द्वितीयो भेदः । यच्च पर्यायोक्ते निरूपितं तत्सर्वमत्राप्यनुसरणीयम् । अथ सर्वेषु संकरप्रभेदेषु व्यङ्ग्यसंभावनानिरासप्रकारं साधारणमाह—**अपि चेति**। क्वचिदपि संकरालंकारे चेति संबन्धः । सर्वभेदभिन्न इत्यर्थः । संकीर्णतामिश्रत्वं लोलीभावः । तत्र कथमेकस्य प्राधान्यं क्षीरजलवत् । 'अधिकारादपेतस्य वस्तुनोऽन्यस्य या स्तुतिः । अप्रस्तुतप्रशंसा सा त्रिविधा परिकीर्तिता ॥' अप्रस्तुतस्य च वर्णनं प्रस्तुताक्षेपिण इत्यर्थः । स चाक्षेपस्त्रिविधो भवति—सामान्यविशेषभावात्, निमित्तनिमित्तिभावात्, सारूप्याच्च । तत्र प्रथमे प्रकारद्वये प्रस्तुताप्रस्तुतयोस्तुल्यमेव प्राधान्यमिति प्रतिज्ञां करोति—अप्रस्तुतेत्यादिना प्राधान्यमित्यन्तेन । तत्र सामान्यविशेषभावेऽपि द्वयी गतिः—सामान्यमप्राकरणिकं शब्देनोच्यते, गम्यते तु प्राकरणिको विशेषः स एकः प्रकारः । यथा—'अहो संसारनैर्घृण्यमहो दौरात्म्यमापदाम् । अहो निसर्गजिह्मस्य दुरन्ता गतयो विधेः ॥' अत्र हि दैवस्वातन्त्र्यं सर्वत्र सामान्यरूपमप्रस्तुतं वर्णितं सत्प्रकृते वस्तुनि क्वापि विनष्टे विशेषात्मनि पर्यवस्यति । तत्रापि विशेषांशस्य सामान्येन व्याप्तत्वाद्व्यङ्ग्यस्य विशेषवद्वाच्यस्य सामान्यस्यापि प्राधान्यम् । न हि सामान्यविशेषयोर्युगपत्प्राधान्यं विरुध्यते । यदा तु विशेषोऽप्राकरणिकः प्राकरणिकं सामान्यमाक्षिपति तदा द्वितीयः प्रकारः । यथा—'एतत्तस्य मुखात्कियत्कमलिनीपत्रे कणं पाथसो यन्मुक्तामणिरित्यमंस्त स जडः शृण्वन्यदस्मादपि । अङ्गुल्यग्रलघुक्रियाप्रविलयिन्यादीयमाने शनैस्तत्रोड्डीय गतो हहेत्यनुदिनं निद्राति नान्तः शुचा ॥' अत्रास्थाने महत्त्वसंभावनं सामान्यं प्रस्तुतम् । अप्रस्तुतं तु जलबिन्दौ मणित्वसंभावनं विशेषरूपं वाच्यम् । तत्रापि सामान्यविशेषयोर्युगपत्प्राधान्ये न विरोध इत्युक्तम् । एवमेको प्रकारो द्विभेदोऽपि विचारितः, यदा तावदित्यादिना विशेषस्यापि प्राधान्यमित्यन्तेन । एतमेव न्यायं निमित्तनैमित्तिकभावेऽतिदिशंस्तस्यापि द्विप्रकारतां दर्शयति—(**निमित्तेति**।) कदाचिन्निमित्तमप्र-

१. 'यत्तु' ग. २. 'अप्यत्र' क-ख. ३. 'संकीर्णं तु' ग. ४. 'अधिकारानपेतस्य' ग. ५. 'परिकल्पिता' क-ख. ६. 'त्रिभिः प्रकारैः' ग. ७. 'प्राधान्यं' ग. ८. 'तत्र च' ग. ९. 'प्राप्तत्वाद्व्यङ्ग्यं च विशेषवद्वाच्यसामान्यस्यापि' ग. १०. 'विभाव्यते' क-ख. ११. 'आक्षिपतीति तत्र' ग. १२. 'कणः पाथसो यो' ग. १३. 'ततः कुत्रोड्डीय गतो मम' ग. १४. 'नातः' क. १५. 'अपि' क-ख-पुस्तकयोर्नास्ति.



तावत्सामान्यस्याप्रस्तुतस्याभिधीयमानस्य प्राकरणिकेन विशेषेण प्रतीयमानेन संबन्धस्तदा विशेषप्रतीतौ सत्यामपि प्राधान्येन तस्य सामान्येनाविनाभावात्सामान्यस्यापि प्राधान्यम् । यदापि विशेषस्य सामान्यनिष्ठत्वं

स्तुतं सदभिधीयमानं नैमित्तिकं प्रस्तुतमाक्षिपति । यथा—'ये यान्त्यभ्युदये प्रीतिं नोज्झन्ति व्यसनेषु च । ते बान्धवास्ते सुहृदो लोकः स्वार्थपरोऽपरः ॥' अत्राप्रस्तुतं सुहृद्बान्धवरूपत्वं निमित्तं संजनासक्त्या वर्णयति नैमित्तिकीं श्रद्धेयवचनतां प्रस्तुतामात्मनोऽभिव्यङ्क्तुम् । तत्र नैमित्तिकप्रतीतावपि निमित्तप्रतीतिरेव प्रधानीभवत्यनुप्राणकत्वेनेति वाच्यव्यङ्ग्ययोः प्राधान्यम् । कदाचित्तु नैमित्तिकमप्रस्तुतं वर्ण्यमानं सत्प्रस्तुतं निमित्तं व्यनक्ति । यथा सेतौ (४।२०) 'सग्गं अपारिजाअं कोत्थुहलच्छिरहिअं महुमहस्स उरम् । सुमरामि महणपुरओ अमुद्धअन्दं च हरजडापब्भारम् ॥' अत्र जाम्बवान् कौस्तुभलक्ष्मीविरहितहरिवक्षःस्मरणादिकमप्रस्तुतनैमित्तिकं वर्णयति प्रस्तुतं वृद्धसेवाचिरजीवित्वव्यवहारकौशलादिनिमित्तभूतं मन्त्रितायामुपादेयमभिव्यङ्क्तुम् । तत्र निमित्तप्रतीतावपि नैमित्तिकं वाच्यभूतम् । प्रत्युत तन्निमित्तानुप्राणितत्वेनोद्धुरकंधरीकरोत्यात्मानमिति समप्रधानतैव वाच्यव्यङ्ग्ययोः । एवं द्वौ प्रकारौ प्रत्येकं द्विविधौ विचार्य तृतीयः प्रकारः परीक्ष्यते सारूप्यलक्षणः । तत्रापि द्वौ प्रकारौ—अप्रस्तुतात्कदाचिद्वाच्याच्चमत्कारः, व्यङ्ग्यं तु तन्मुखप्रेक्षम् । यथास्मदुपाध्यायभट्टेन्दुराजस्य—'प्राणा येन समर्पितास्तव बलाद्येन त्वमुत्थापितः स्कन्धे यस्य चिरं स्थितोऽसि विदधे यस्ते सपर्यामपि । तस्यास्य स्मितमात्रकेण जनयन्प्राणापहारक्रियां भ्रातः प्रत्युपकारिणां धुरि परं वेताल लीलायसे ॥' अत्र यद्यपि सारूप्यवशेन कृतघ्नः कश्चिदन्यः प्रस्तुत आक्षिप्यते तथाप्यप्रस्तुतस्यैव वेतालवृत्तान्तस्य चमत्कारकारित्वम् । नह्यचेतनोपालम्भवदसंभाव्यमानोऽयमर्थो न च हृद्यं इति वाच्यस्यात्र प्रधानता । यदि पुनरचेतनादिनात्यन्तासंभाव्यमानतदर्थविशेषणेनाप्रस्तुतेन वर्णितेन प्रस्तुतमाक्षिप्यमाणं चमत्कारकारि तदा वस्तुध्वनिरसौ । यथा ममैव—'भावव्रात हठाज्जनस्य हृदयान्याक्रम्य यन्नर्तयन्भङ्गीभिर्विविधाभि-

१. 'विशेषणेन' ख. २. 'सत्यां' ग-पुस्तके नास्ति. ३. 'विनाभावात्' क-ख.

१. 'प्रस्तुतं' क-ख-पुस्तकयोर्नास्ति. २. 'सज्जरासन्धो' क-ख. ३. 'प्रस्तुतात्मनो' ग. ४. 'व्यङ्ग्यव्यञ्जकयोः' ग. ५. 'स्मरणरूपमप्रस्तुतस्य वृद्धत्वस्य व्यङ्ग्यस्यानुप्राणकत्वमिति व्यङ्ग्यानुप्राणकत्वेन वाच्यस्यापि प्राधान्यम् । वृद्धतामेव चिरजीवित्व' क-ख. ६. 'उपादेयभूतायां' क-ख. ७. 'प्राणकत्वेन' क-ख. ८. 'किं चायं' क-ख. ९. 'प्रेक्ष्यम्' क-ख. १०. 'जीवाप' ग. ११. 'सारूप्यवशेन' ग-पुस्तके नास्ति. १२. 'अन्यः प्रस्तुतः' ग-पुस्तके नास्ति. १३. 'नालम्भवद' क-ख. १४. 'न हृद्यः' क-ख.

तदापि सामान्यस्य [1]प्राधान्ये सामान्ये सर्वविशे[2]षाणामन्तर्भावाद्विशेषस्यापि प्राधान्यम् । निमित्तनिमित्तिभावे चायमेव न्यायः । यदा तु सारूप्यमात्रव[3]शेनाप्रस्तुतप्रशंसायामप्रकृतप्रकृतयोः संबन्धस्तदाप्यप्रस्तुतस्य सरूपस्याभिधीयमानस्य [4]प्राधान्येनाविवक्षायां ध्वनावेवान्तःपातः । इतरथा त्वलंकारान्तरमेव । तदयमत्र संक्षेपः—

---

रात्महृदयं प्रच्छाद्य यत्क्रीडसे । [1]यस्त्वामाह जडं ततः सहृदयंमन्यत्वदुःशिक्षितो मन्येऽमुष्य [2]जडात्मनः स्तुतिपदं त्वत्साम्यसंभावनात् ॥' कश्चिन्महापुरुषो वीतरागोऽपि सरागवदिति न्यायेन गाढविवेकालोकतिरस्कृततिमिरप्रतानोऽपि लोकमध्ये स्वात्मानं प्रच्छादयँल्लोकं च वाचालयन्नात्मन्यप्रतिभासमेवाङ्गीकुर्वंस्तेनैव लोकेन मूर्खोऽयमिति यदावज्ञायते तदा तदीयं लोकोत्तरं चरितं प्रस्तुतं व्यङ्ग्यतया प्राधान्येन प्रकाश्यते । जडोऽयमिति ह्युद्यानेन्दूदयादिर्भावो लोके नावज्ञायते । स च प्रत्युत कस्यचिद्विरहिण औत्सुक्यचिन्तादूयमानमानसतामन्यस्य प्रहर्षपरवशतां करोतीति हठादेव लोकं [3]यथेच्छं विकारकारणादिभिर्नर्तयति । न च तस्य हृदयं केनापि ज्ञायते कीदृगयमिति । प्रत्युत महागम्भीरोऽतिविदग्धः सुष्ठुगर्वहीनोऽतिशयेन क्रीडाचतुरः सपदि लोकेन जड इति तत एव कारणात्प्रत्युत वैदग्ध्यसंभावनानिमित्तात्संभावितः । आत्मा च यत एव कारणात्[4]प्रत्युत जाड्येन संभाव्यस्त[5]त एव सहृदयः संभावितस्तदस्य लो[6]कस्य जडोऽसीति यद्युच्यते तदा जाड्यमेवंविधस्य भावव्रातस्यातिविदग्धस्य प्रसिद्धमिति सा प्रत्युत स्तुतिरिति जडादपि पापीयानयं लोक इति ध्वन्यते । तदाह—**यदा त्विति । इतरथा त्विति** । इतरथैव पुनर[7]लंकारत्वमलंकारविशेषत्वम् । न व्यङ्ग्यस्य कथंचिदपि प्राधान्यमिति भावः । उद्देशे यदादिग्रहणं कृतं समासोक्तीत्यत्र द्वन्द्वे तेन व्याजस्तुतिप्रभृतिरलंकारवर्गो[8]ऽपि संभाव्यमान[9]व्यङ्ग्यानुप्रवेशः संभावितः । तत्र सर्वत्र साधारणमुत्तरं दातुमुपक्रमते—**[10]तदयमत्रेति** । किंयद्वा प्रतिपदं लिख्यतामिति भावः । [11]तत्र व्याजस्तुतिर्यथा—'किं वृत्तान्तैः परगृहगतैः किंतु नाहं समर्थस्तूष्णीं स्थातुं प्रकृतिमुखरो दाक्षिणात्यस्वभावः । गेहेगेहे विपणिषु तथा चत्वरे पानगोष्ठ्यामुन्मत्तेव भ्रमति भवतो वल्लभा हन्त कीर्तिः ॥' अत्र व्यङ्ग्यं स्तुत्यात्मकं यत्तेन वाच्यमेवोपस्क्रियते । यत्तूदाहृतं केनचित्—'आसीन्नाथ पितामही तव मही [12]जाता त-

---

१. 'प्राधान्येन' क-ख. २. 'विशेषणानां' क-ख. ३. 'वशेनान्यस्य' क-ख. ४. 'प्राधान्यस्य' क-ख.

---

१. 'स त्वां' क-ख. २. 'जडात्मना' क-ख. ३. 'यथेष्टं' ग. ४. 'प्रत्युत' ग-पुस्तके नास्ति. ५. 'अतः' ग. ६. 'लोकस्य' ग-पुस्तके नास्ति. ७. 'अलंकारान्तरत्व—विशेषणत्वं' क-ख. ८. 'अलंकारः सर्वोऽपि' ग. ९. 'व्यङ्ग्योऽनु' ग. १०. 'तदयमत्रेति । तदयमिति' क-ख. ११. 'अत्र' ग. १२. 'माता' ग.



'व्यङ्ग्यस्य यत्राप्राधान्यं वाच्यमात्रानुयायिनः ।
समासोक्त्यादयस्तत्र वाच्यालंकृतयः स्फुटाः ॥ १४ ॥'
'व्यङ्ग्यस्य प्रतिभामात्रे वाच्यार्थानुगमेऽपि वा ।
न ध्वनिर्यत्र वा तस्य प्राधान्यं न प्रतीयते ॥ १५ ॥'

---

तोऽनन्तरं [1]माता संप्रति साम्बुराशिरशना जाया कुलोद्भूतये । पूर्णे वर्षशते भविष्यति पुनः सैवानवद्या स्नुषा युक्तं नाम समग्रनीतिविदुषां किं भूपतीनां कुले ॥' इति । तदस्माकं [2]ग्राम्यं प्रतिभाति । अत्यन्ता[3]सभ्यस्मृतिहेतुत्वात् । का [4]वानेन स्तुतिः कृता । त्वं वंशक्रमेण राजेति [5]हि कियदिदम् । इत्येवंप्राया व्याजस्तुतिः सहृदय[6]गोष्ठीनिन्दितेत्युपेक्ष्यैव । '[7]यस्य विकारः प्रभव[8]न्नप्रतिबद्धेन हेतुना येन । गमयति तदभिप्रायं तत्[9]प्रतिबद्धं च भावोऽसौ ॥' इति । अत्रापि वाच्यप्राधान्ये भावालंकारता । यस्य चित्तवृत्तिविशेषस्य संबन्धी वाग्व्यापारादिर्विकारो[10]ऽप्रतिबद्धोऽनियतः [11]प्रभवंस्तं चित्तवृत्तिविशेषरूपमभिप्रायं येनाप्रतिबद्धेन हेतुना गमयति स हेतुर्यथेष्टोपभो[12]ग्यत्वादि[13]लक्षणार्थो भावालंकारः । यथा—'[14]एकाकिनी यदबला तरुणी [15]तथाहमस्मिन्गृहे गृहपतिश्च गतो विदेशम् । किं याचसे तदिह वासमियं वराकी श्वश्रूर्ममान्धबधिरा ननु मूढ पान्थ ॥' अत्र व्यङ्ग्यमेकैकत्र [16]पदार्थं उपस्करोतीति वाच्यं [17]प्रधानम् । [18]प्राधान्ये हि भावालंकारता । व्यङ्ग्य[19]प्राधान्ये तु न काचिदलंकारतेति निरूपितम् । इत्यलं बहुना ।

यत्रेति काव्ये । **अलंकृतय इति** । अलंकृतित्वादेव च [20]वाच्योपस्कारकत्वम् । **प्रतिभामात्र इति** । यत्रोपमादौ [21]क्लिष्टा प्रतीतिः । **वाच्यार्थानुगम इति** । वाच्येनार्थेनानुगमः समं प्राधान्यमप्रस्तुतप्रशंसायामिवेत्यर्थः । **न प्रतीयत इति** । स्फुटतया प्राधान्यं न चकास्ति, अपि तु बलात्कल्प्यते, [22]तथापि हृदयेनानुप्रविशति । [23]यथा—'[24]देआ पसिअणिआतासु' इत्यत्रान्यकृतासु व्याख्यासु । तेन चतुर्षु प्रकारेषु न ध्वनि[25]र्व्यवहा-

---

१. 'जाता' ग. २. 'काव्यं' ग. ३. 'असह्य' ग. ४. 'चानेन विस्मृतिः' ग. ५. 'हि' ग-पुस्तके नास्ति. ६. 'गोष्ठीषु' ग. ७. रुद्रटप्रणीतकाव्यालंकारग्रन्थस्येयमार्या. ८. 'अप्रतिबन्धस्तु' ग. ९. 'प्रतिबन्धं' ग. १०. 'अप्रतिबद्धो' ग-पुस्तके नास्ति. ११. 'प्रतिबद्धस्तं' ग. १२. 'उपयोक्तृत्वादि' क, 'उपयोग्यत्वादि' ख. १३. 'लक्षणोऽर्थो' ग. १४. एतदुदाहरणमपि रुद्रटालंकारस्थमेव. १५. 'यथाहमस्मद्गृहे' क-ख. १६. 'पदार्थोपस्कारकारीति' क-ख. १७. 'प्रधानम्' क-ख-पुस्तकयोर्नास्ति. १८. 'प्राधान्ये हि भावालंकारता' ग-पुस्तके नास्ति. १९. 'प्राधान्येन तु न कदाचित्' क-ख. २०. 'वाच्यार्थो' ग. २१. 'क्लिष्टा' क-ख. २२. 'तथापि च' क-ख. २३. 'यथा' ग-पुस्तके नास्ति. २४. 'देआइ पसिअणु अन्तसु' ग. २५. 'व्यवहारः सद्भावेऽपि व्यङ्ग्यस्य प्राधान्ये क्लिष्ट' ग.

'तत्परावेव शब्दार्थौ यत्र व्यङ्ग्यं प्रति स्थितौ ।
ध्वनेः स एव विषयो मन्तव्यः संकरोज्झितः ॥ १६ ॥'

तस्मान्न ध्वनेरन्यत्रान्तर्भावः । इतश्च नान्तर्भावः यतः काव्यविशेषोऽङ्गी ध्वनिरिति कथितः । तस्य पुनरङ्गानि—अलंकारा गुणा वृत्तयश्चेति प्रतिपादयिष्यन्ते । न चावयव एव पृथग्भूतोऽवयवीति प्रसिद्धः । अपृथग्भावे तु तदङ्गत्वं तस्य । न तु तत्त्वमेव । यत्रापि वा तत्त्वं तत्रापि ध्वनेर्महाविषयत्वान्न तन्निष्ठत्वमेव । सूरिभिः कथित इति विद्वदुपज्ञेय-

---

रसद्भावेऽपि व्यङ्ग्यस्य प्राधान्यम् । अप्राधान्ये क्लिष्टप्रतीतौ वाच्येन समप्राधान्येऽस्फुटप्राधान्ये च । क्व तर्ह्यसावित्याह—**तत्परावेवेति** । संकरेणालंकारानुप्रवेशसंभावनया उज्झित इत्यर्थः । संकरालंकारेणेति त्वसत् । अन्यालंकारोपलक्षणत्वे हि क्लिष्टं स्यात् । **इतश्चेति** । न केवलमन्योन्यविरुद्धवाच्यवाचकभावव्यङ्ग्यव्यञ्जकभावसमाश्रयत्वात् । न तादात्म्यमलंकाराणां ध्वनेश्च यावत्स्वामिभृत्यवदङ्गिरूपाङ्गरूपयोर्विरोधादित्यर्थः । **अवयव इति** । एकैक इत्यर्थः । तदाह—**पृथग्भूत इति** । पृथग्भूतस्तथा माभूत्, समुदायमध्यनिपतितस्तर्ह्यस्तु तथेत्याशङ्क्याह—**अपृथग्भावे त्विति** । तदापि न स एक एव समुदायः । अन्येषामपि समुदायिनां तद्भावात् । तत्समुदायिमध्ये च प्रतीयमानमप्यस्ति । न च तदलंकाररूपम् । प्रधानत्वादेव । यत्त्वलंकाररूपं तदप्रधानत्वान्न ध्वनिः । तदाह—**न तु तत्त्वमेवेति** । नन्वलंकार एव कश्चित्त्वया प्रधानताभिषेकं दत्त्वा ध्वनिरित्यात्मेति चोक्त इत्याशङ्क्याह—**यत्रापि वेति** । नहि समासोक्त्यादीनामन्यतम एवासौ तथास्माभिः कृतः । तद्विविक्तत्वेऽपि तस्य भावात् । समासोक्त्याद्यलंकारस्वरूपस्य समस्तस्याभावेऽपि तस्य दर्शितत्वात् 'अत्ता एत्थ' इति 'कस्स वा ण' इत्यादि । तदाह—**न तन्निष्ठत्वमेवेति** । तस्मिन्निष्ठा पर्यवसानं यस्येति तन्न भवति । महाविषयत्वात् । व्यापकत्वादित्यर्थः । घटो घट एव न भवति, किं तु तत्कर्परेऽपि, तत्रापि

---

१. 'अलंकारो' क-ख. २. 'न' क-ख-पुस्तकयोर्नास्ति.

---

१. 'क्लिष्ट' क-ख. २. 'स्फुटे प्राधान्ये क' क-ख. ३. 'उत्थित' ग. ४. 'म्लिष्टं' क-ख. ५. 'अनेन' क-ख. ६. 'इत्याह' क-ख. ७. 'तदाह' क-ख-पुस्तकयोर्नास्ति. ८. 'अथ पृथग्भूतस्तदा' क-ख. ९. 'समुदायपतितः' क-ख. १०. 'पृथग्भावेति' क-ख. ११. 'तन्नभावात्' क-ख. १२. 'समुदाय' क-ख. १३. 'यदलंकार' ग. १४. 'त्वया' क-ख-पुस्तकयोर्नास्ति. १५. 'तस्मिन्' इत्यारभ्य 'विद्वदुपज्ञेति' इत्यन्तं ग-पुस्तके नास्ति.



मुक्तिः, न तु यथाकथंचित्प्रवृत्तेति प्रतिपाद्यते । प्रथमे हि विद्वांसो वैयाकरणाः । व्याकरणमूलत्वात्सर्वविद्यानाम् । ते च श्रूयमाणेषु वर्णेषु ध्वनिरिति व्यवहरन्ति । तथैवान्यैस्तन्मतानुसारिभिः सूरिभिः काव्यतत्त्वार्थदर्शिभिर्वाच्यवाचकसंमिश्रः शब्दात्मा काव्यमिति व्यपदेश्यो व्यञ्ज-

---

न भवति किं तु घटेऽपीत्यनेन व्यापकोऽयमित्युक्तं भवति महाविषयत्वात् । **विद्वदुपज्ञेति** । विद्वद्भ्य उपज्ञा प्रथम उपक्रमो यस्या उक्तेरिति बहुव्रीहिः । तेन 'उपज्ञोपक्रमं' इति तत्पुरुषाश्रयं नपुंसकत्वं निरवकाशम् । **श्रूयमाणेष्विति** । श्रोत्रशष्कुलीं संतानेनागता अन्त्याः शब्दाः श्रूयन्त इति प्रक्रियायां शब्दाः श्रूयमाणा इत्युक्तम् । तेषां घण्टानुरणनरूपत्वं तावदस्ति । ते च ध्वनिशब्देनोक्ताः । यथाह भगवान्भर्तृहरिः—'यः संयोगवियोगाभ्यां करणैरुपजन्यते । स स्फोटः शब्दजः शब्दो ध्वनिरित्युच्यते बुधैः ॥' एवं घण्टादिनिर्ह्रादस्थानीयोऽनुरणनात्मोपलक्षितो व्यङ्ग्योऽप्यर्थो ध्वनिरिति व्यवहृतः । इत्येष प्रकारोऽव्यक्तशब्दानामेव वर्तते । व्यक्तशब्दानां तथा श्रूयमाणा ये वर्णा नादशब्दवाच्या अन्त्यबुद्धिनिर्ग्राह्याः स्फोटाभिव्यञ्जकास्ते ध्वनिशब्देनोक्ताः । यथाह भगवान्स एव—'प्रत्ययैरनुपाख्येयैर्ग्रहणानुग्रहैस्तथा । ध्वनिप्रकाशिते शब्दे स्वरूपमवधार्यते ॥' इति । तेन व्यञ्जकौ शब्दार्थावपीह ध्वनिशब्देनोक्तौ । किंच वर्णेषु तावन्मात्रपरिमाणेष्वपि सत्सु । यथोक्तम्—'अल्पीयसापि यत्नेन शब्दमुच्चारितं मतिः । यदि या नैव गृह्णाति वर्णं वा सकलं स्फुटम् ॥' इति । तेषु तावत्स्वेव श्रूयमाणेषु वक्तुर्योऽन्यो द्रुतविलम्बितादिवृत्तिभेदात्मा प्रसिद्धादुच्चारणादिव्यापारादभ्यधिकः स ध्वनिरुक्तः । यदाह स एव—'शब्दस्योर्ध्वमभिव्यक्तेर्वृत्तिभेदास्तु वैकृताः । ध्वनयः समुपोहन्ते स्फोटात्मा तैर्न भिद्यते ॥' इति । अस्माभिरपि प्रसिद्धेभ्यः शब्दव्यापारेभ्योऽभिधातात्पर्यलक्षणारूपेभ्योऽतिरिक्तो व्यापारो ध्वनिरित्युक्तः । एवं चतुष्कमपि ध्वनिः । तद्योगाच्च

---

१. 'प्रकाश्यते' ग. २. 'तेषु श्रूय' क-ख. ३. 'व्याहरन्ति' ख. ४. 'तथैवान्यैः' इत्यारभ्य 'आविष्करणीयम्' इत्यन्तं क-ख-पुस्तकयोर्नास्ति.

---

१. 'विद्वदुपज्ञा' ग. २. 'अस्या' क-ख. ३. 'श्रयत्वं' ग. ४. 'शब्दजाः शब्दा इत्युक्तम्' क-ख. ५. 'तत्राह' क-ख. ६. 'तत्रभवान्भर्तृ' ग. ७. 'शब्दजाः शब्दा ध्वनयोऽन्यैरुदाहृताः' ग. ८. 'घण्टानाद' ग. ९. 'इत्येष—शब्दानां' ग-पुस्तके नास्ति. १०. 'यथा' क-ख. ११. 'स एव तत्रभवान्' ग. १२. 'इति तेन' ग-पुस्तके नास्ति. १३. 'अपि' ग-पुस्तके नास्ति. १४. 'किं च' ग-पुस्तके नास्ति. १५. 'आदि' ग-पुस्तके नास्ति. १६. 'भेदं तु' क-ख. १७. 'संमपोहन्ते' क-ख. १८. 'ध्वनिरुक्तः' ग.

कत्वसाम्याद्ध्वनिरित्युक्तः । न चैवंविधस्य ध्वनेर्वक्ष्यमाणप्रभेदतद्भेदसंकलनया महाविषयस्य यत्प्रकाशनं तदत्र प्रसिद्धालंकारविशेषमात्रप्रतिपादनेन तुल्यमिति तद्भावितचेतसां युक्त एव संरम्भः । न च तेषु कथंचिदीर्ष्यया कलुषितशेमुषीकत्वमाविष्करणीयम् । तदेवं ध्वनेस्तावदभाववादिनः प्रत्युक्ताः ।

अस्ति ध्वनिः । स चासावविवक्षितवाच्यो विवक्षितान्यपरवाच्यश्चेति

---

समस्तमपि काव्यं ध्वनिः । तेन व्यतिरेकाव्यतिरेकव्यपदेशोऽपि न युक्तः । **वाच्यवाचकसंमिश्र इति ।** वाच्यवाचकसहितः संमिश्र इति मध्यमपदलोपी समासः । 'गामश्वं पुरुषं पशुम्' इतिवत्समुच्चयोऽत्र चकारेण विनापि । तेन वाच्योऽपि ध्वनिः वाचकोऽपि शब्दो ध्वनिः । द्वयोरपि [2]व्यञ्जकत्वं ध्वनित्वभावात् । संमिश्रिते विभावानुभावसंवलनच्छाययेति व्यङ्ग्योऽपि ध्वनिः । ध्वन्यत इति कृत्वा । शब्दनं शब्दः शब्दव्यापारः । न[3] चासावभिधादिरूपः । अपि त्वात्मभूतः । सोऽपि ध्वननाद्ध्वनिः । काव्यमिति व्यपदेश्यश्च योऽर्थः सोऽपि ध्वनिः । उक्तप्रकारध्वनिचतुष्टयत्वात् । अतएव साधारणहेतुमाह—**व्यञ्जकत्वसाम्यादिति ।** [4]व्यञ्जकत्वं व्यञ्जनभावः सर्वेषु पक्षेषु सामान्यरूपः । साधारण इत्यर्थः । यत्पुनरेतदुक्तं 'वाग्विकल्पानामानन्त्यात्' इत्यादि तत्परिहरति—न **चैवंविधस्येति ।** वक्ष्यमाणः प्रभेदो यथा—मुख्ये द्वे रूपे । तद्भेदा यथा—अर्थान्तरसंक्रमितवाच्यः अत्यन्ततिरस्कृतवाच्य इत्यविवक्षितवाच्यस्य, असंलक्ष्यक्रमव्यङ्ग्यः संलक्ष्यक्रमव्यङ्ग्य इति विवक्षितान्यपरवाच्यस्येति । तत्राप्यवान्तरभेदाः । **महाविषयस्येति ।** अशेषलक्ष्यव्यापिन इत्यर्थः । विशेषग्रहणेनाव्यापकत्वमाह । मात्रशब्दे[5]नाङ्गित्वाभावम् । [6]न चैवं भवतीत्यन्वयः । तत्र ध्वनिस्वरूपे भावितं प्रणिहितं चेतो येषाम् । [7]न चमत्काररूपेण [8]भावितमधिवासितम् । अत एव मुकुलितलोचनत्वादिविकारकारणं चेतो येषामिति । **अभाववादिन इति ।** अवान्तरप्रकारत्रयभि[9]न्ना अपीत्यर्थः । तेषां प्रत्युक्तौ फलमाह—**अस्तीति ।** उदाहरणपृष्ठे भाक्तत्वं सुशङ्कं सुपरिहरं च भवतीत्यभिप्रायेणोदाहरणदानावकाशार्थं भाक्तत्वाल्लक्षणीयत्वे प्रथमं परिहरणयोग्येऽप्यप्रतिसमाधाय भविष्यद्[10]दुद्योतानुवादानुसारेण वृत्तिकृदेव प्रभेदनिरूपणं करोति—**स चेति ।** पञ्चधापि ध्वनिश[11]ब्दार्थे येन यत्र यतो यस्य यस्मै इति बहुव्रीह्यर्थाश्रयेण यथोचितं सामानाधिकरण्यं सुयोज्यम् । वाच्ये[12]ऽर्थे तु ध्वनौ वाच्यशब्देन 'स्वात्मा [13]वक्ष्यते । तेनाविवक्षितोऽप्रधानी-

---

१. 'व्यञ्जकत्वात् । ध्वनतीति कृत्वा' ग. २. 'संवलनयेति' क-ख. ३. 'स चापि ध्वनिः । उक्तप्रकारध्वनिचतु' क-ख. ४. 'व्यङ्ग्यस्य व्यञ्जकभावः' ग. ५. 'अङ्गित्वभावं' क-ख. ६. 'न चैवं भवतीत्यन्वयः' ग-पुस्तके नास्ति. ७. 'न वा' क-ख. ८. 'वासितं चेतो येषाम्' क-ख. ९. 'भिन्नोऽपीत्यर्थः' क-ख. १०. 'उद्योते गतानुवादानुसरणेन' ग. ११. 'शब्दार्थौ' ग. १२. 'अर्थे' क-ख-पुस्तकयोर्नास्ति. १३. 'वक्ष्यते' क-ख-पुस्तकयोर्नास्ति.



द्विविधः सामान्येन ।

तत्राद्यस्योदाहरणम्—

'सुवर्णपुष्पां पृथिवीं चिन्वन्ति पुरुषास्त्रयः ।
शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम् ॥'

द्वितीयस्यापि—

'शिखरिणि क्व नु नाम कियच्चिरं किमभिधानमसावकरोत्तपः ।
तरुणि येन तवाधरपाटलं दशति बिम्बफलं शुककशावकः ॥'

---

[1]भूतः स्वात्मा येनेत्यविवक्षितवाच्यो व्यञ्जकोऽर्थः । एवं विवक्षितान्यपरवाच्येऽपि । यदि वा कर्मधारयः । अत्र पक्षे विवक्षितश्चासौ वाच्यश्चेति । तत्रार्थः कदाचिद[2]नुपपद्यमानत्वादिना निमित्तेनाविवक्षितो भवति । कदाचिद[3]उपपद्यमान इति कृत्वा विवक्षित एव । व्यङ्ग्यपर्यन्तां [4]तु प्रतीतिं स्वसौभाग्यमहिम्ना करोति । अत एवार्थोऽत्र प्राधान्येन व्यञ्जकः । पूर्वत्र शब्दः । ननु च विवक्षा चान्यपरत्वं चेति विरुद्धम् । अन्यपरत्वेनैव [5]विवक्षणात्को विरोधः । **सामान्येनेति ।** वस्त्वलंकाररसात्मना [6]हि त्रिभेदोऽपि ध्वनिरुभाभ्यामेवाभ्यां संगृहीत इति भावः । ननु [7]तन्नामपृष्ठे एतन्नामनिवेशनस्य किं फलम् । उच्यते—अनेन हि नामद्वयेन ध्वननात्मनि व्यापारे पूर्वप्रसिद्धाभिधातात्पर्यलक्षणात्मकव्यापारत्रितयावगतार्थप्रतीतेः प्रतिपत्तृगतायाः प्रयोक्त्रभिप्रायरूपायाश्च विवक्षायाः सहकारित्वमुक्तमिति ध्वनिस्वरूपमेव नामभ्यामेव [8]प्रोज्जीवितम् । **सुवर्णपुष्पामिति ।** सुवर्णानि पुष्प्यतीति सुवर्णपुष्पा । एतच्च [9]वाक्यमेवासंभवत्स्वार्थमिति कृत्वाविवक्षित[10]वाच्यम् । तत एव पदार्थ[11]मभिधायान्वयं च तात्पर्यशक्त्यावगमय्यैव बाधक[12]वशेनोपहत्य सादृश्यात्सुलभसमृद्धिसंभारभाजनतां लक्षयति । [13]तल्लक्षणाप्रयोजकं शूरकृतविद्यसेवकानां प्राशस्त्यमशब्दवाच्यत्वेन गोप्यमानं सन्नायिकाकुचकलशयुगलमिव महार्घतामु[14]पयद्ध्वन्यत इति । शब्दोऽत्र प्रधानतया व्यञ्जकः, [15]अर्थस्तु तत्सहकारितयेति चत्वारो [16]व्यापाराः । **शिखरिणीति ।** नहि [17]निर्विघ्नोत्तमसिद्धयोऽपि श्री[18]पर्वतादय इमां सिद्धिं विदध्युः । दिव्यकल्पसहस्रादिश्चात्र परिमितः कालः । किमभिधा-

---

१. 'कृतः ।……णार्थपथे अविवक्षितश्चासावर्थश्चेति । विवक्षितान्यपरश्चासौ वाच्यश्चेति । तत्रार्थः कदाचिद्' ग. २. 'अनुपपाद्य' क-ख. ३. 'उपपाद्य' क-ख. ४. 'तु' क ख-पुस्तकयोर्नास्ति. ५. 'विवक्षितात्' ग. ६. 'हि' ग-पुस्तके नास्ति. ७. 'किंनाम' ग. ८. 'प्रोज्झितम्' क-ख. ९. 'वाक्यक्रमेऽसंभवत्' ग. १०. 'वाच्यात्' ग. ११. 'अभिधेयान्वयं च' ग. १२. 'वशेन तमपहस्य' ग. १३. 'तल्लक्षणप्रयोजनं' ग. १४. 'उपनयत्' क-ख. १५. 'अर्थस्तत्' क-ख. १६. 'व्यारोपाः' ग. १७. 'निर्विघ्नाक्रम' ग. १८. 'श्रीपर्वतप्रभृतय इत्थं' ग.

यदप्युक्तं भक्तिर्ध्वनिरिति तत्प्रतिसमाधीयते—

**'भक्त्या बिभर्ति नैकत्वं रूपभेदादयं ध्वनिः।'**

---

नमिति न चैवंविधोत्तमफल[1]जनकत्वेन पञ्चाग्निप्रभृत्यपि तपः श्रुतम् । तवेति भिन्नं पदम् । समासेन विगलिततया सा न [2]प्रतीयते । तव दशतीत्यभिप्रायेण । तेन यत्[3]केचिदाहुः—'वृत्तानुरोधात्त्वदधरपाटलमिति न कृतम्' इति, तदसदेव । [4]दशतीत्यास्वादयति । अनवच्छिन्नप्रबन्धतया न त्वौदरिकवत्परं भुङ्क्ते । अपि तु रसज्ञोऽत्रेति तत्प्राप्तिवदेव रसज्ञताप्यस्य तपःप्रभावादेवेति । शुकशावक इति तारुण्यादुचितकाल[5]लोभोऽपि फलं तपस एवेति । अनुरागिणश्च प्रच्छन्नस्वाभिप्रायख्यापनचाटुविरचनात्मकविभावोन्मीलनं व्यङ्ग्यम् । अत्र च त्रय एव व्यापाराः—अभिधा तात्पर्यं ध्वननं चेति । [6]मुख्यार्थबाधाद्यभावे मध्यमकक्ष्याया लक्षणायास्तृतीयस्या [7]अभावात् । यदिवाकस्मिकविशिष्टप्रश्नार्थानुपपत्तेर्[8]मुख्यार्थबाधायां सादृश्याल्लक्षणा भवतु मध्ये । तस्यास्[9]तु प्रयोजनं ध्वन्यमानमेव । तच्चतुर्थकक्ष्यानिवेशि । [10]केवलं पूर्वत्र लक्षणैव प्रधानं ध्वनन[11]व्यापारसहकारि । इह त्वभिधातात्पर्यशक्ती । वाक्यार्थसौन्दर्यादेव व्यङ्ग्यप्रतिपत्तेः केवलं लेशेन लक्षणा[12]व्यापारोपयोगोऽप्यस्तीत्युक्तम् । असंलक्ष्यक्रमव्यङ्ग्ये तु लक्षणा[13]समुन्मेषमात्रमपि नास्ति । [14]असंलक्ष्यत्वादेव क्रमस्येति वक्ष्यामः । तेन द्वितीयेऽपि भेदे चत्वार एव व्यापाराः । अत एवोभयोदाहरणपृष्ठ एव भाक्तमाहुरित्य[15]नुभाष्य दूषयति—**भक्त्या बिभर्तीति** । अ-

---

१. 'फलत्वेन' क-ख. २. 'प्रतीयतां' ग. ३. 'केचित्' ग-पुस्तके नास्ति. ४. 'दशतीति' ग-पुस्तके नास्ति. ५. 'लोभोऽपि तपसैवेति' ग. ६. 'मुख्याद्बाधाविरहे मध्यम' ग. ७. 'भावात्' ग. ८. 'मुख्यबाधायां' ग. ९. 'तु' क-ख-पुस्तकयोर्नास्ति. १०. 'न केवलं' क-ख. ११. 'व्यापारे' ग. १२. 'व्यापारयोगो' ग. १३. 'समुद्देशमात्रं नास्ति. १४. 'अस्तु लक्ष्यत्वादेव' ग. १५. 'अनुभाष्य' इत्यारभ्य 'उपचारमात्रमिति' इतिपर्यन्तं पुस्तकेष्वतीव पाठपौर्वापर्यं वर्तते. तत्र ख-पुस्तकेऽयं पाठक्रमः—'अनुभाष्य भक्त्यादिना दूषयति—अत्रोक्तप्रकार इति पञ्चस्वर्थेषु योज्यम् । शब्देऽर्थे व्यापारे व्यङ्ग्ये समुदाये च । रूपभेदं दर्शयितुं ध्वनेस्तावद्रूपमाह—वाच्येति । भक्तिश्च ध्वनिश्चेति । ताद्रूप्यं लक्षणमुपलक्षणमिति त्रिविधमपि मतं दूषयति । किं पर्यायवत्ताद्रूप्यं पृथिवीत्वमिव पृथिव्याः । अन्यव्यावर्तकधर्मरूपतया लक्षणम्, उत काक इव देवदत्तस्य संभवमात्रादुपलक्षणम् । तत्र प्रथमं पक्षं निराकरोति—भक्त्या बिभर्तीति । तात्पर्येण विश्रान्तिधामतया । प्रयोजनत्वेनेति यावत् । प्रकाशनं द्योतनमित्यर्थः । उपचारमात्रमिति' इति. ग-पुस्तके तु—'अनुभाष्य दूषयति । अयं भावः—भक्ती······तिकं पर्यायात्ताद्रूप्यमथ पृथिवीत्वमिव पृथि······अन्यतो व्यावर्तकधर्मरूपतया लक्षणम्, उत काक इव देवदत्तगृहस्य संभवमात्र·········भेदं दर्शयितुं ध्वनेस्तावद्रूपमाह—वाच्येति । तात्पर्येण विश्रान्तिधामतया प्रयोजनत्वेने·········रमात्रमिति । उपचा·········'.



अयमुक्तप्रकारो ध्वनिर्भक्त्या नैक[1]त्वं बिभर्ति । भिन्नरूपत्वात् । वाच्यव्यतिरिक्तस्यार्थस्य वाच्यवाचकाभ्यां तात्पर्येणार्थप्रकाशनं यत्र [2]व्यङ्ग्यप्राधान्ये स ध्वनिः । उपचारमात्रं [3]तु भक्तिः ।

[4][5]तन्नैतत्स्याद्भक्तिर्लक्षणं ध्वनेरित्याह—

**'अतिव्याप्तेरथाव्याप्तेर्न चासौ लक्ष्यते तया ॥ १७ ॥'**

[6]न च भक्त्या ध्वनिर्लक्ष्यते । कथम् । अतिव्याप्तेरव्याप्तेश्च । तत्रातिव्याप्तिर्ध्वनिव्यतिरिक्तेऽपि विषये भक्तेः संभवात् । यत्र हि [7]व्यञ्जकत्वकृतं महत्सौष्ठवं नास्ति तत्राप्युपचरितशब्दवृत्त्या प्रसिद्ध्यनुरोधप्रवर्तितव्यवहाराः कवयो दृश्यन्ते । यथा—

---

त्रोक्तप्रकार इति पञ्चस्वर्थेषु योज्यम् । शब्देऽर्थे व्यापारे व्यङ्ग्ये समुदाये च । रूपभेदं दर्शयितुं ध्वनेस्तावद्रूपमाह—**वाच्येति** । तात्पर्येण विश्रान्तिधामतया । प्रयोजनत्वेनेति यावत् । प्रकाशनं द्योतनमित्यर्थः । भक्तिश्च ध्वनिश्चेति ताद्रूप्यं लक्षणमुपलक्षणमिति त्रिविधमपि मतं दूषयति । किं [1]पर्यायवत्ताद्रूप्यम् । [2]अथ पृथिवीत्वमिव पृथिव्या [3]अन्यतो व्यावर्तकधर्मरूपतया लक्षणम्, उत काक इव देवदत्तगृहस्य संभवमात्रादुपलक्षणम् । तत्र प्रथमं पक्षं निराकरोति—**उपचारमात्रमिति** । उपचारो गुणवृत्तिर्लक्षणा उपचरणमतिशयितो व्यवहार इत्यर्थः । मात्रशब्देनेदमाह—यत्र लक्षणाव्यापारात्तृतीयादन्यश्चतुर्थः प्रयोजनद्योतनात्मा व्यापारो वस्तुस्थित्या संभवन्नप्यनुपयुज्यमानत्वेनाद्रियमा[4]णत्वादस्मत्कल्पो यमर्थमधिकृत्य प्रवर्तते तद्धि प्रयोजनलक्षणम् । तत्रापि लक्षणास्तीति कथं ध्वननं लक्षणा चेत्येकं तत्त्वं स्यात् । द्वितीयं पक्षं दूषयति—**तन्नै[5]तदिति** । असाविति ध्वनिः । तयेति भक्त्या । ननु ध्वननमवश्यंभावीति कथं तद्व्यतिरिक्तोऽस्ति विषय इत्याह—**महत्सौष्ठवमिति** । अत एव [6]प्रयोजनस्यानादरणीयत्वाद्व्यञ्जकत्वे न कृत्यं किंचिदिति भावः । महद्ग्रहणेन गुणमात्रं [7]तद्भवति । यथोक्तम्—'समाधिरन्यधर्मस्य क्वाप्यारोपो विवक्षितः' इति । दर्शयति (?) । ननु प्रयोजनाभावे कथं तथा व्यवहार इत्याह—**प्रसिद्ध्यनुरोधेति** । परम्परया तथैव प्रयोगात् । वयं तु ब्रूमः—प्रसिद्धिर्या प्रयोजनस्य निगूढतेत्यर्थः । उत्तानेनापि रूपेण तत्प्रयोजनं चेकासन्नि-

---

१. 'नैकतां' ग. २. 'व्यङ्ग्यप्राधान्ये' क-ख-पुस्तकयोर्नास्ति. ३. 'तु' क-ख-पुस्तकयोर्नास्ति. ४. 'मा चैतत्' ग. ५. 'नैव' ग. ६. 'च' ग. ७. 'व्यङ्ग्यकृतं' ग.

---

१. 'पर्यायस्ताद्रूप्यं' ग. २. 'अथ' क-ख-पुस्तकयोर्नास्ति. ३. 'अन्यव्यावर्तक' क-ख. ४. 'माणत्वात्संकल्पो' क-ख. ५. 'अतिव्याप्तेरिति' ग. ६. 'प्रयोजनस्य प्रयोजनानादरणाद्व्यञ्जकत्वे' क-ख. ७. 'न तद्भवति' क-ख. ८. 'प्रयोजनस्यानिरूढते' ग. ९. 'च तां निरूढतां' ग.

'परिम्लानं पीनस्तनजघनसङ्गादुभयत-
स्तनोर्मध्यस्यान्तः परिमलनमप्राप्य हरितम्।
इदं व्यस्तन्यासं प्रशिथिलभुजाक्षेपवलनैः
कृशाङ्ग्याः संतापं वदति बिसिनीपत्रशयनम्॥'

तथा—

'चुम्बिज्जइ सअहुत्तं अवरुन्धिज्जइ सहस्सहुत्तम्मि।
विरमिअ पुणो रमिज्जइ पिओ जणो णत्थि पुनरुत्तम्॥'

तथा—

'कुविआओ पसन्नाओ ओरुण्णमुहीओ विहसमाणाओ।
जह गहिओ तह हिअअं हरन्ति उच्छिन्नमहिलाओ॥'

तथा—

'अज्जाएँ पहारो णवलदाए दिण्णो पिएण थणवट्टे।
मिउओ वि दूसहो व्विअ जाओ हिअए सवत्तीणम्॥'

गूढतां निधानवदपेक्षत इति भावः। **यथेति**। वदतीत्युपचारेण हि स्फुटीकरणप्रतिपत्तिः। प्रयोजनं यद्यगूढं स्वशब्देनोच्यते किमचारुत्वं स्यात्। गूढतया वर्णनेन किं चारुत्वमधिकं जातम्। अनेनैवाशयेन वक्ष्यति—यत उक्त्यन्तरेणाशक्यं किं यदिति। अवरुन्धिज्जइ आलिङ्ग्यते। पुनरुक्तमित्यनुपादेयता लक्ष्यते। उक्तार्थस्यासंभवात्। 'कुपिताः प्रसन्ना अवरुदितवदना विहसन्त्यः। यथा गृहीतास्तथा हृदयं हरन्ति स्वैरिण्यो महिलाः॥' अत्र ग्रहणेनोपादेयता लक्ष्यते। हरणेन तत्परतन्त्रतापत्तिः। **तथा अज्जेति**। कनिष्ठभार्यायाः स्तनपृष्ठे नवलतया कान्तेनोचितक्रीडायोगेन मृदुकोऽपि प्रहारो दत्तः सपत्नीनां सौभाग्यसूचकं तत्क्रीडासंविभागमप्राप्तानां हृदये दुःसहो जातः। मृदुत्वादेव अन्यस्य दत्तो मृदुः प्रहारोऽन्येन च संवेद्यते दुःसहश्च मृदुरपीति चित्रम्।

१. 'परिमिलनं' ग. २. 'श्लथभुजलताक्षेप' क-ख. ३. 'यथा' ग. ४. 'चुम्ब्यते शतकृत्वोऽवरुध्यते सहस्रकृत्वः। विरम्य पुना रम्यते प्रियो जनो नास्ति पुनरुक्तम्॥' इति च्छाया. ५. 'यथा' ग. ६. टीकायामेव च्छायास्ति. ७. 'यथा' ग. ८. 'कनिष्ठभार्यायाः प्रहारो नवलतया दत्तः प्रियेण स्तनपृष्ठे। मृदुकोऽपि दुःसह इव जातो हृदये सपत्नीनाम्॥' इति च्छाया.

१. 'यथेति' ग-पुस्तके नास्ति. २. 'यद्यरूढं' ग. ३. 'उपरुदित' क-ख. ४. 'तत' क-ख-पुस्तकयोर्नास्ति. ५. 'सूचकः' क-ख. ६. 'मृदुलत्वादेव' ग. ७. 'अन्यस्य संपद्यते' ग.



तथा—

'परार्थे यः पीडामनुभवति भङ्गेऽपि मधुरो
यदीयः सर्वेषामिह खलु विकारोऽप्यभिमतः।
न संप्राप्तो वृद्धिं यदि स भृशमक्षेत्रपतितः
किमिक्षोर्दोषोऽसौ न पुनरगुणाया मरुभुवः॥'

इत्यत्रेक्षुपदेऽनुभूतिशब्दः। न चैवंविधः कदाचिदपि ध्वनेर्विषयोऽभिमतः। यतः—

**'उक्त्यन्तरेणाशक्यं यत्तच्चारुत्वं प्रकाशयन्।**
**शब्दो व्यञ्जकतां बिभ्रद्ध्वन्युक्तेर्विषयी भवेत्॥ १८॥'**

अत्र चोदाहृते विषये नोक्त्यन्तराशक्यचारुत्वव्यक्तिहेतुः शब्दः। किं च—

**'रूढा ये विषयेऽन्यत्र शब्दाः स्वविषयादपि।**
**लावण्याद्याः प्रयुक्तास्ते न भवन्ति पदं ध्वनेः॥ १९॥'**

दानेनात्र फलवत्त्वं लक्ष्यते। **तथा परार्थेति**। यद्यपि प्रस्तुतमहापुरुषापेक्षयानुभवतिशब्दो मुख्य एव तथाप्यप्रस्तुते इक्षौ प्रशस्यमाने पीडाया अनुभवनेनासंभवता पीडावत्त्वं लक्ष्यते। तच्च पीड्यमाने पर्यवस्यति। नन्वस्त्यत्र प्रयोजनं तत्किमिति न ध्वन्यत इत्याशङ्क्याह—**न चैवंविध इति। यत उक्त्यन्तरेणेति**। उक्त्यन्तरेण ध्वन्यतिरिक्तेन स्फुटेन. शब्दार्थो(भय)व्यापारविशेषेणेत्यर्थः। शब्द इति पञ्चस्वर्थेषु योज्यम्। **ध्वन्युक्तेर्विषयी भवेदिति**। ध्वनिशब्देनोच्यत इत्यर्थः। **उदाहृत इति**। वदतीत्यादौ। एवं यत्र प्रयोजनं सदपि नादरास्पदं तत्र को ध्वननव्यापार इत्युक्त्वा यत्र मूलत एव प्रयोजनं नास्ति, भवति चोपचारस्तत्रापि को ध्वननव्यापार इत्याह—**किं चेति**। लावण्याद्या ये शब्दाः स्वविषयाल्लवणरसयुक्तत्वादेः स्वार्थादन्यत्र हृद्यत्वादौ रूढाः रूढत्वादेव त्रितयसंनिध्युपेक्षणव्यवधानशून्याः। यदाह—'निरूढा लक्षणा काचित्सामर्थ्यादभिधानवत्' इति। ते तस्मिन्स्वविषयादन्यत्र प्रयुक्ता अपि न ध्वनेः पदं भवन्ति। न तत्र ध्वनिव्यवहारः। उपचरिता शब्दस्य वृत्तिर्गौणी। लाक्षणिकी-

१. 'यथा' ग. २. 'च' ग. ३. 'अयं' ग. ४. 'इत्यादाविक्षुपदेऽनुभूतिशब्दः' क-ख. ५. 'कदाचिद्ध्वनेर्विषयः। यतः' क-ख. ६. 'णाशक्यं' ख. ७. 'नोक्त्यन्तरेणाशक्य' क-ख. ८. 'निरूढा' ग.

१. 'तद्बलवत्त्वं' ग. २. 'न' ग-पुस्तके नास्ति. ३. 'ध्वन्यर्थे' क-ख. ४. 'लक्षणाः काश्चित्' ग. ५. 'शब्दवृत्तिः' ग.

तेषु चोपचरितशब्दवृत्तिरस्तीति । तथाविधे च विषये क्वचित्संभवन्नपि ध्वनिव्यवहारः प्रकारान्तरेण प्रवर्तते । न तथाविधशब्दमुखेन ।

अपि च ।

**'मुख्यां वृत्तिं परित्यज्य गुणवृत्त्यार्थदर्शनम् ।**
**यदुद्दिश्य फलं तत्र शब्दो नैव स्खलद्गतिः ॥ २० ॥'**

तत्र[2] हि चारुत्वातिशयविशिष्टार्थप्रकाशनलक्षणे[3] प्रयोजने कर्तव्ये यदि

---

त्यर्थः । आदिग्रहणेनानुलोम्यं प्रातिकूल्यं सब्रह्मचारीत्येवमादयः शब्दा लाक्षणिका गृह्यन्ते । लोम्नामनुगतमनुलोमं मर्दनम् । कूलस्य प्रतिपक्षतया स्थितं स्रोतः प्रतिकूलम् । तुल्यगुरुः सब्रह्मचारी । इति मुख्यो विषयः । अन्यः पुनरुपचरित एव । न चात्र प्रयोजनं किंचिदुद्दिश्य लक्षणा प्रवृत्तेति न तद्विषयो ध्वननव्यवहारः । ननु 'देवडिति लुणाहि पलुत्तम्मिगमिज्वालवणुज्वल्लं गुमरिफोल्लपरण्य' (?) इत्यादौ लावण्यादिशब्दसंनिधानेऽस्ति प्रतीयमानाभिव्यक्तिः । सत्यम् । सा तु न लावण्यशब्दात् । अपि तु समग्रवाक्यार्थप्रतीत्यनन्तरं ध्वननव्यापारादेव । अत्र हि प्रियतमामुखस्यैव समस्ताशाप्रकाशकत्वं ध्वन्यत इत्यलं बहुना । तदाह—**प्रकारान्तरेणेति** । व्यञ्जकत्वेनैव । न तूपचरितलावण्यादिशब्दप्रयोगादित्यर्थः । एवं यत्र यत्र भक्तिस्तत्र तत्र ध्वनिरिति तावन्नास्ति । तेन यदि ध्वनेर्भक्तिर्लक्षणं तदा भक्तिसंनिधौ सर्वत्र ध्वनिव्यवहारः स्यादित्यतिव्याप्तिमभ्युपगम्यापि ब्रूमः—भवतु यत्र यत्र भक्तिस्तत्र तत्र ध्वनिः । तथापि यद्विषयो लक्षणाव्यापारो न तद्विषयो ध्वननव्यापारः । न च भिन्नविषयो धर्मधर्मिभावो धर्म एव लक्षणमित्युच्यते । तत्र लक्षणा तावदमुख्यार्थविषयो व्यापारः। ध्वननं च प्रयोजनविषयम् । न च तद्विषयोऽपि द्वितीयो लक्षणाव्यापारो युक्तः । लक्षणासामग्र्यभावात् । इत्यभिप्रायेणाह—**अपि चेत्यादि** । मुख्यां वृत्तिमभिधाव्यापारं परित्यज्य परिसमाप्य गुणवृत्त्या लक्षणारूपयार्थस्यामुख्यस्य दर्शनं प्रत्यायना सा यत्फलं कर्मभूतं प्रयोजनरूपमुद्दिश्य क्रियते तत्र प्रयोजने तावद्द्वितीयो व्यापारः । न चासौ लक्षणैव । यतः स्खलन्ती बाधकव्यापारेण विधुरीक्रियमाणा गतिरवबोधनशक्तिर्यस्य शब्दस्य तदीयो व्यापारो लक्षणा । न च प्रयोजनमवगमयतः शब्दस्य बाधकयोगः । तथाभावे तत्रापि निमित्तान्तरस्य प्रयोजनान्तरस्य चान्वेषणेनावस्थानात् । तेनायं लक्षणलक्षणाया न विषय

---

१. 'शब्दप्रवृत्ति' ग. २. 'अत्र' ग. ३. 'लक्षणाप्रयोजने' ग.

---

१. 'चेत्यर्थः' क-ख. २. 'लोम्नानुगतं' ग. ३. 'सदनम्' क-ख. ४. 'ध्वनिव्यवहारः' ग. ५. 'प्रियतमस्यैव' क-ख. ६. 'बहुना' क-ख-पुस्तकयोर्नास्ति. ७. 'ध्वनेर्यदि' ग. ८. 'अतिव्याप्तिरभ्युपगमस्यापि' क-ख. ९. 'यद्विषयोऽपि' ग. १०. 'विषयोः' ग. ११. 'युक्तः' क-ख-पुस्तकयोर्नास्ति. १२. 'व्यापारं च' ग. १३. 'अदर्शनं' ग. १४. 'अपगमयतः' ग.



शब्दस्यामुख्यता तदा तस्य प्रयोगे दुष्टतैव स्यात् । न चैवम् । तस्मात्—

**'वाचकत्वाश्रयेणैव गुणवृत्तिर्व्यवस्थिता ।**
**व्यञ्जकत्वैकमूलस्य ध्वनेः स्याल्लक्षणं कथम् ॥ २१ ॥'**

तस्मादन्यो ध्वनिरन्या च गुणवृत्तिः । अव्याप्तिरस्य[1] लक्षणस्य । नहि

---

इति भावः । दर्शनमिति ण्यन्तो निर्देशः । कर्तव्य इत्येव । अवगमयितव्य इत्यर्थः । **अमुख्यतेति** । बाधके न विधुरीकृततेत्यर्थः । तस्येति शब्दस्य । **दुष्टतैवेति** । प्रयोजनावगमस्य सुखसंपत्तये हि स शब्दः प्रयुज्यते । तस्मान्न मुख्यार्थे । यदि च 'सिंहो बटुः' इति शौर्यातिशयेऽप्यवगमयितव्ये स्खलद्गतित्वं शब्दस्य तत्तर्हि प्रतीतिं नैव कुर्यादिति किमर्थं तस्य प्रयोगः । उपचारेण करिष्यतीति चेत्तत्रापि प्रयोजनान्तरमन्विष्यते तत्राप्युपचारेऽनवस्था । अथ न तत्र स्खलद्गतित्वं तर्हि प्रयोजनेऽवगमयितव्ये न लक्षणाख्यो व्यापारः । तत्सामग्र्यभावात् । न च नास्ति व्यापारः । न चासावभिधा । समयस्य तत्राभावात् । यद्व्यापारान्तरमभिधालक्षणातिरिक्तं स ध्वननव्यापारः । **न चैवमिति** । न च प्रयोगे दुष्टता काचित् । प्रयोजनस्याविघ्नेनैव प्रतीतेः । तेनाभिधैव मुख्येऽर्थे बाधकेन प्रविवित्सुर्निरुध्यमाना सती अचरितार्थत्वादन्यत्र प्रसरतीति । अत एव मुख्योऽस्यायमर्थ इति व्यवहारः । तथैव चामुख्यतया संकेतग्रहणमपि तत्रास्तीत्यभिधापुच्छभूतैव लक्षणा (उपसंहरति—**तस्मादिति** । यतोऽभिधापुच्छभूतैव लक्षणा) ततो हेतोर्वाचकत्वमभिधाव्यापारमाश्रिता तद्बाधनेनोत्थानात्तत्पुच्छभूतत्वाच्च गुणवृत्तिः । गौणलाक्षणिकप्रकार इत्यर्थः । सा कथं ध्वनेर्व्यञ्जनात्मनो लक्षणं स्यात् । भिन्नविषयत्वादिति । एतदुपसंहरति—**तस्मादिति** । यतोऽतिव्याप्तिरुक्ता तत्प्रसङ्गेन च भिन्नविषयत्वं तस्माद्धेतोरित्यर्थः । एवम् 'अतिव्याप्तेरथाव्याप्तेर्न चासौ लक्ष्यते तया' इति कारिकागतामतिव्याप्तिं व्याख्यायाव्याप्तिं व्याचष्टे—**अव्याप्तिरस्येति** । अस्य गुणवृत्तिरूपस्येत्यर्थः । यत्र यत्र ध्वनिस्तत्र तत्र यदि भक्तिर्भवेन्न च स्यादव्याप्तिः । न चैवम् । अविवक्षितवाच्येऽस्ति भक्तिः 'सुवर्णपुष्पां—' इत्यादौ । 'शिखरिणि—' इत्यादौ तु सा कथम् । ननु लक्षणा तावद्गौणमपि व्याप्नोति । केवलं शब्दस्तमर्थं लक्षयित्वा तेनैव सह सामानाधिकरण्यं भजते । 'सिंहो बटुः' इति । अर्थो वार्थान्तरं लक्षयित्वा स्ववाचकेन तद्वाचकं समानाधिकरणं करोति । शब्दार्थौ वा युगपत्तं लक्षयित्वा ताभ्या-

---

१. 'अप्यस्य' ग.

---

१. 'उपगमस्य' ग. २. 'स' क-ख-पुस्तकयोर्नास्ति. ३. 'तस्मिन्नमुख्येऽर्थे' क-ख. ४. 'अन्वेष्यम्' ग. ५. 'अथ' ग-पुस्तके नास्ति. ६. 'न' क-ख-पुस्तकयोर्नास्ति. ७. 'तेनाभिधेयमुख्यार्थबाधकेन प्रविधुरीकृता प्रि········माना सती' ग. ८. 'उप—' इत्यारभ्य 'लक्षणा' इत्यन्तं क-ख-पुस्तकयोर्नास्ति. ९. 'आचष्टे' क-ख. १०. 'यदि' क-ख-पुस्तकयोर्नास्ति. ११. 'ह्यस्ति' ग. १२. 'गौणीमपि' ग.

ध्वनिप्रभेदो विवक्षितान्यपरवाच्यलक्षणः। अन्ये च बहवः प्रकारा[1] भक्त्या व्याप्यन्ते। तस्माद्भक्तिरलक्षणम्।

---

मेव शब्दार्थाभ्यां मिश्रीभवत इत्येवं लाक्षणिकाद्गौणस्य भेदः। यदाह—'गौणे शब्दप्र[1]योगः, न लक्षणायाम्' इति। तत्रापि लक्षणास्त्येवेति सर्व[2]त्र सैव व्यापिका। सा च प[3]ञ्चविधा। तद्यथा—अभिधेयेन संयोगात्। द्विरेफशब्दस्य हि[4] योऽभिधेयो भ्रमरशब्दः द्वौ रेफौ यस्येति कृत्वा ते[5]न भ्रमरशब्देन यस्य संयोगः संबन्धः षट्पदलक्षणस्यार्थस्य सोऽर्थो द्विरेफशब्देन लक्ष्यते। अभिधेयसंबन्धं व्याख्यातरूपं निमित्तीकृत्य सामीप्यात्। 'गङ्गायां घोषः'। समवायादिति। [6]स्वसंबन्धादित्यर्थः। 'यष्टीः प्रवेशय' इति यथा। वैपरीत्यात्। यथा—शत्रुमुद्दिश्य कश्चिद्ब्रवीति—'किमिवोपकृतं न तेन मम' इति। क्रियायोगादिति। कार्यकारणभावादित्यर्थः। यथा—अन्नापहारिणि व्यवहारः 'प्राणानयं हरति' इति। एवमनया लक्षणया पञ्चविधया विश्वमेव व्याप्तम्। तथाहि—'शिखरिणि–' इत्यत्राकस्मिकप्रश्नविशेषादिबाधकानुप्रवेशे सादृश्याल्लक्षणास्त्येव। नन्वत्राङ्गीकृतैव मध्ये लक्षणा। कथं तर्ह्युक्तं विवक्षितान्यपरेति। त[7]द्भेदोऽत्र मुख्योऽसंलक्ष्यक्रमात्मा विवक्षितः। तद्भेदशब्देन च रसभावतदाभासतत्प्रशमभेदास्तदवान्तरभेदाश्च। न च तेषु लक्षणाया उपपत्तिः। तथाहि विभावानुभावप्रतिपादके काव्ये तत्रार्थे मुख्ये तावद्बाधकानुप्रवेशोऽप्यसंभाव्य इति को लक्षणावकाशः। ननु किं बाधया इयदेव लक्षणास्वरूपम्—'अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते' इति। इह चाभिधेयानां विभावानुभावादीनामविनाभूता रसादय इति लक्ष्यन्ते। विभावानुभावयोः कारणकार्यरूपत्वात्, व्यभिचारिणां च तत्सहकारित्वादिति चेत्, मैवम्। धूमशब्दाद्धूमे प्रतिपन्ने ह्यग्निस्मृतिरपि लक्षणाकृतैव स्यात्। ततोऽग्नेः शीतापनोदस्मृतिरित्यादिरपर्यवसितः शब्दार्थः स्यात्। धूमशब्दस्य स्वार्थविश्रान्तत्वान्न तावति व्यापार इति चेत्, आयातं तर्हि मुख्यार्थबाधो लक्षणाया जीवितमिति। सति हि तस्मिन्स्वार्थविश्रान्त्यभावात् न च विभावादिप्रतिपादने बाधकं किंचिदस्ति। नन्वेवं धूमावगमनानन्तराग्निस्मरणवद्विभावादिप्रतिपत्त्यनन्तरं रत्यादिचित्तवृत्तिप्रतिपत्तिरिति शब्दव्यापार एवात्र नास्ति। इदं तावदयं प्रतीतिज्ञो मीमांसकः प्रष्टव्यः—किमत्र परचित्तवृत्तिमात्रे प्रतिपत्तिरेव रसप्रतिपत्तिरभिमता भवतः। नैवं भ्रमितव्यम्। एवं हि लोकगतचित्तवृत्त्यनुमानमात्रामिति का रसता। यस्त्वलौकिकचमत्कारात्मा रसास्वादः काव्यगतविभावादिचर्वणाप्राणो नासौ [8]स्मरणानुमानादिना खलीकारपात्रीकर्तव्यः।

---

१. 'तद्भेदप्रकारा वक्ष्यमाणभक्त्या' ग.

---

१. 'प्रयोगेण लक्षणां' क-ख. २. 'सैव सर्वत्र' ग. ३. 'पञ्चधा' ग. ४. 'हि' क-ख-पुस्तकयोर्नास्ति. ५. 'तेन' क-ख-पुस्तकयोर्नास्ति. ६. 'स्व' ग-पुस्तके नास्ति. ७. 'न तद्भेदो हि मुख्यो' क-ख. ८. 'स्मरणानुमानादिसाम्येन' ग.



किं तु लौकिकेन कार्यकारणानुमानादिना संस्कृतहृदयो विभावादिकं प्रतिपद्यमान एव न ताटस्थ्येन प्र[1]तिपद्यते। अपि तु हृदयसंवादापरपर्यायसहृदयत्वपरवशीकृततया पूर्णीभविष्यद्रसास्वादाङ्कुरीभावेनानुमानस्मरणादिसरणिमनारुह्यैव तन्मयीभवनोचितचर्वणाप्राणतया। न चासौ चर्वणा प्रमाणान्तरतो जाता पूर्वं येनेदानीं स्मृतिः स्यात्। न चाधुना कुतश्चित्प्रमाणान्तरादुत्पन्ना। अलौकिके प्रत्यक्षाद्यव्यापारात्। अत एवालौकिक एव विभावादिव्य[2]वहारः। यदाह—'यदयमनुभावयति वागङ्गसत्त्वकृतोऽभिनयस्तस्मादनुभाव इति। तच्चित्तवृत्तितन्मयीभवनमेव ह्यनुभवनम्। लोके तु कार्यमे[4]वोच्यते नानुभावः। अत एव परकीया न चित्तवृत्तिर्गम्यत इत्यभिप्रायेण 'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः' इति सूत्रे स्थायिग्रहणं न कृतम्। तत्प्रत्युत शल्यभूतं स्यात्। स्थायिनस्तु रसीभाव औचित्यादुच्यते। तद्विभावानुभावोचितचित्तवृत्तिसंस्कारसुन्दरचर्वणोदयात्। हृदयसंवादोपयोगिलो[3]कचित्तवृत्तिपरिज्ञानावस्थायामुद्यानपुलकादिभिः स्थायिभूतरत्याद्यवगमाच्च। व्यभिचारी तु चित्तवृत्त्यात्मत्वेऽपि मुख्यचित्तवृत्तिपरवश एव च[4]र्व्यत इति विभावानुभावमध्ये गणितः। अत एव रस्यमानताया एषैव निष्पत्तिर्या प्रबन्धप्रवृत्तब[5]न्धुसमागमादिकारणोदितहर्षादिलौकिकचित्तवृत्तिन्यग्भावेन चर्वणारूपत्वम्। अतश्चर्वणात्राभिव्यञ्जनमेव, न तु ज्ञापनम्। प्रमाणव्यापारवत्। नाप्युत्पादनम्। हे[6]तुव्यापारवत्। ननु यदि ने[7]यं ज्ञप्तिर्न वा निष्पत्तिः, तर्हि किमेतत्। न[8] त्वयमसावलौकिको र[9]सः। अपि तु चर्वणोपयोगी। ननु क्वैतद्दृष्टमन्यत्र। यत एव न दृष्टं तत एवालौकिकमित्युक्तम्। नन्वेवं रसोऽ[10]प्रमेयः स्यात्। अस्तु। किं ततः। तच्चर्वणात एव प्र[11]तीतिव्युत्पत्तिसिद्धेः कि[12]मन्यदर्थनीयम्। नन्वप्रमाणकमेतत्। न। [13]स्वसंवेदनसिद्धत्वात्। ज्ञानविशेषस्यैव चर्वणात्मत्वात्। इत्यलं बहुना। अतश्च रसोऽयमलौकिकः। येन ललितपरुषानुप्रासस्यार्थाभिधाना[14]नुपयोगिनोऽपि रसं प्रति व्यञ्जकत्वम्। का तत्र लक्षणायाः शङ्कापि। काव्यात्मकशब्दनि[15]ष्पादनेनैव तच्चर्वणा दृश्यते। दृश्यते हि तदेव का[16]व्यं पुनः पुनः पठं[17]श्चर्वमाणश्च [18]सहृदयो लोकः। न तु काव्यस्य तत्र 'उपादेयापि ये हेया' इति न्यायेन कृतप्रतीतिकस्यानुपयोग एवेति श[19]ब्दस्यापि ध्वननव्यापारः। अत एवालक्ष्यक्रमता। यत्तु वाक्यभेदः स्यादिति केनचिदुक्तम्, तदनभिज्ञतया। शास्त्रं हि सकृदुच्चारितं समयबलेनार्थं प्रतिपादयद्युगपद्विरुद्धानेकसमयस्मृत्ययोगात्कथमर्थद्वयं प्र[20]त्यापयेत्। अविरुद्धत्वे वा तावा-

---

१. 'प्रतीयते' ग. २. 'व्यवहार एव' क-ख. ३. 'लोकवृत्ति' क-ख. ४. 'चोच्यते' क. ५. 'यत्प्रबलप्रवृत्तत्वं बन्धु' ग. ६. 'स्वव्यापार' ग. ७. 'नैवं' क-ख. ८. 'नन्वयं' ग. ९. 'रसः। ननु विभावादिरत्र किं ज्ञापको हेतुरुत कारकः। न ज्ञापको न कारकः। अपि तु' ग. १०. 'अप्रमाणं' क-ख. ११. 'प्रीतिव्युत्पत्ति' क, 'प्रीत्युत्पत्ति' ख. १२. 'किमर्थनीयम्' ग. १३. 'स्व' क-ख-पुस्तकयोर्नास्ति. १४. 'नुपयोगेऽपि ग. १५. 'निष्पीडनेनैव' क-ख. १६. 'कार्यं' क-ख. १७. 'चर्व्यमाणः' ग. १८. 'सहृदयलोकः' क-ख. १९. 'शब्दस्यापीह ध्वननं' ग. २०. 'प्रत्याययेत्' क-ख.

**'कस्यचिद्ध्वनिभेदस्य सा तु स्यादुपलक्षणम् ।**

सा पुनर्भक्तिर्वक्ष्यमाणप्रभेदमध्यादन्यतमस्य भेदस्य यदि नामोपलक्षणतया संभाव्येत[1] । यदि च गुणवृत्त्यैव ध्वनिर्लक्ष्यत इत्युच्यते तदभिधा-

---

नेको वाक्यार्थः स्यात् । क्रमेणापि[1] विरम्यव्यापारयोगः । पुनरुच्चारितेऽपि[2] वाक्ये स एव । समयादिप्रकरणादेस्तादवस्थ्यात् । प्रकरणसमयप्राप्यार्थ[3]तिरस्कारेणार्थान्तर[4]प्रत्यायकत्वे हि नियमाभाव इति । तेन 'अग्निहोत्रं जुहुयात्स्वर्गकामः' इति श्रुतौ खादेच्च न मांसमित्येष नार्थ इत्यत्र का प्रमेति प्रसज्यते । तत्रापि[5] न काचिदियत्तेत्यनाश्वास इत्येवं वाक्यभेदो दूषणम् । इह तु विभावाद्यैव प्रतिपाद्यमानं चर्वणाविषयतोन्मुखमिति[6] समयाद्युपयोगाभावः । न च नियुक्तोऽहमत्र करवाणि कृतार्थोऽहमिति शास्त्रप्रतीति[ः] सदृशमदः । तत्रोत्तरकर्तव्यौन्मुख्येन लौकिकत्वात् । इह तु विभावादिचर्वणाद्भुतपुष्पवत्तत्कालसारैवोदिता न पूर्वापरकालानुबन्धिनीति लौकिकास्वादाद्योगिविषयाच्चान्य एवायं रसास्वादः । अत एव 'शिखरिणि–' इत्यादावपि मुख्यार्थबाधादिक्रममनपेक्ष्यैव सहृदया[7] वक्त्रभिप्रायं चाटुप्रतीत्यात्मकं संवेदयन्ते । अत[8] एव ग्रन्थकारः सामान्येन विवक्षितान्यपरवाच्ये ध्वनौ[9] भक्तेरभावमभ्यधात्[10] । अस्माभिस्तु द्वन्द्वरूढं प्रत्याययितुमुक्तम् । भवत्वत्र लक्षणा । अलक्ष्यक्रमे तु कुपितोऽपि किं करिष्यसीति । यदि तु न कुप्यते 'सुवर्णपुष्पां–' इत्यादावविवक्षितवाच्येऽपि मुख्यार्थबाधादिलक्षणासामग्रीमनपेक्ष्यैव व्यङ्ग्यार्थविश्रान्तिरित्यलं बहुना । उपसंहरति—**तस्माद्भक्तिरिति ।**

ननु मा भूद्ध्वनिरिति[11] भक्तिरिति चैकं रूपम् । मा च भूद्भक्तिर्ध्वनेर्लक्षणम् । उपलक्षणं तु[12] भविष्यति[13] । यत्र ध्वनिर्भवति तत्र भक्तिरप्यस्तीति भक्त्युपलक्षितो ध्वनिर्न तावदेतत्सर्वत्रास्ति । इयता च किं परस्य सिद्धं किं वा नु(नः) त्रुटितमिति तदाह—**कस्यचिदित्यादि ।** ननु भक्तिस्तावच्चिरंतनैरुक्ता । तदुपलक्षणमुखेन च ध्वनिमपि समग्रभेदं लक्षयिष्यन्ति[14] । किं तल्लक्षणेनेत्याशङ्क्याह—**यदि चेति ।** अभिधानाभिधेयभावो ह्यलंकाराणां व्यापकः[15] । ततश्चाभिधावृत्ते वैयाकरणमीमांसकैर्निरूपिते कुत्रेदा-

---

१. 'संभाव्यते' क-ख.

---

१. 'क्रमेण विरम्य व्यापारायोगः' क-ख. २. 'अपि' ग-पुस्तके नास्ति. ३. 'प्राप्तार्थ' क, 'प्राप्यार्थ' ख. ४. 'अर्थान्तरत्व' ग. ५. 'तत्र न' ग. ६. 'विषयोन्मुखं' क-ख. ७. 'सहृदयाः' ग-पुस्तके नास्ति. ८. 'तत एव' क-ख. ९. 'ध्वनौ' क-ख-पुस्तकयोर्नास्ति. १०. 'भक्तेरसभावं' क-ख. ११. 'भक्तिर्ध्वनिरिति' क-ख. १२. 'तु' क-ख-पुस्तकयोर्नास्ति. १३. 'भविष्यति' क-ख. १४. 'लक्षयिष्यन्ति ज्ञास्यन्ति च' ग. १५. व्यापक इत्यारभ्य अलंकाराणामित्यन्तं क-ख-पुस्तकयोर्नास्ति.



व्यापारेण तदितरो[1]ऽलंकारवर्गः समग्र एव लक्ष्यत इति प्रत्येकमलंकाराणां लक्षणकरणे[2] वैयर्थ्यप्रसङ्गः । किं च

**लक्षणेऽन्यैः कृते चास्य पक्षसंसिद्धिरेव नः ॥ २२ ॥'**

कृतेऽपि वा पूर्वमेवान्यैर्ध्वनिलक्षणे पक्षसंसिद्धिरेव नः । यस्माद्ध्वनिरस्तीति नः[3] पक्षः । स च प्रागेव संसिद्ध इत्ययत्नसंपन्नसमीहितार्थाः संपन्नाः स्मः । येऽपि सहृदयहृदयसंवेद्यमनाख्येयमेव ध्वनेरात्मानमाम्नासिपुस्तेऽपि न परीक्ष्यवादिनः । यत उक्तया नीत्या वक्ष्यमाणया च ध्वनेः सामान्यविशेषलक्षणे प्रतिपादितेऽपि यद्यनाख्येयत्वं तत्सर्वेषामेव वस्तूनां तत्प्रसक्तम् । यदि पुनर्ध्वनेरतिशयोक्त्यानया काव्यान्तरातिशायि तैः[4] स्वरूपमाख्यायते तत्तेऽपि युक्ताभिधायिन एव ।

इति श्रीराजानकानन्दवर्धनाचार्य[5]विरचिते ध्वन्यालोके[6] प्रथम उद्द्योतः[7] ।

---

नीमलंकाराणां व्यापारः । यथा हेतुबलात्कार्यं जायत इति तार्किकैरुक्ते किमिदानीमीश्वरप्रभृतीणां कर्तॄणां ज्ञातॄणां वा कृत्यमपूर्वं स्यादिति सर्वो निरालम्बः स्यात् । तदाह—**लक्षणकरणे[1] वैयर्थ्यप्रसङ्ग इति[2] ।** मा भूद्वा पूर्वोन्मीलनम् । पूर्वोन्मीलितमेवास्माभिः सम्यङ्निरूपितं तथापि को दोष इत्यभिप्रायेणाह—**किं चेत्यादि । प्रागेवेति ।** अस्मत्[3]प्रयत्नादिति शेषः । एवं त्रिप्रकारमभाववादं, भक्त्यन्तर्भूततां च निराकुर्वता लक्षणीयत्वमेतन्मध्ये निराकृतमेव[4] । अत एव मूलकारिका साक्षात्तन्निराकरणार्था न श्रूयते । वृत्तिकृत्तु निराकृतमपि प्रमेयसंख्यापूरणाय[5] कण्ठेन तत्पक्षमनूद्य निराकरोति—**येऽपीत्यादिना ।** उक्तया नीत्या 'यत्रार्थः[6] शब्दो वा–' इति सामान्यलक्षणं प्रतिपादितम् । वक्ष्यमाणया तु नीत्या विशेषलक्षणं भविष्यति 'अर्थान्तरे संक्रमितं–' इत्यादिना । तेनात्र प्रथमोद्द्योते ध्वनेः सामान्यलक्षणमेव कारिकाकारेण कृतम् । द्वितीयोद्द्योते कारिकाकारोऽवान्तरविभागं विशेषलक्षणं च विदधदनुवादमुखेन मूलविभागं द्विविधं सूचितवान्[7] । तदाशयानुसारेण तु वृत्तिकृदत्रैवोद्द्योते[8] मूलविभागमवोचत्[9] 'स च

---

१. 'तदितरालंकार' ग. २. 'करणवैयर्थ्य' ग. ३. 'वादिनः' क-ख. ४. 'अतिशयितं स्वरूपं' ग. ५. 'श्रीमदानन्द' क-ख. ६. 'काव्यालोके' क, 'सहृदयालोकनाम्नि काव्यालंकारे' ग. ७. 'संकेतः' ख.

---

१. 'करणवैयर्थ्य' ग. २. 'इति' क-ख-पुस्तकयोर्नास्ति. ३. 'अस्मात्' ग. ४. 'निराकुर्वत एव' ग. ५. 'परिपूरणाय स्वकण्ठे' ग. ६. यत्रार्थ इत्यारभ्य नीत्या इत्यन्तं क-ख-पुस्तकयोर्नास्ति. ७. 'सूचितम्' क-ख. ८. 'वृत्तिर्यदत्र' क-ख ९. 'मूलभागं' ग.

द्वितीय उद्द्योतः।

एवमविवक्षितवाच्यविवक्षितान्यपरवाच्यत्वे ध्वनिर्द्विप्रकारः प्रकाशितः। तत्राविवक्षितवाच्यस्य प्रभेदप्रतिपादनायेदमुच्यते—

'अर्थान्तरे संक्रमितमत्यन्तं वा तिरस्कृतम्।
अविवक्षितवाच्यस्य ध्वनेर्वाच्यं द्विधा मतम्॥ १॥'

द्विविधः' इति। **सर्वेषामिति**। लौकिकानां शास्त्रीयाणां चेत्यर्थः। **अतिशयोक्त्येति**। तथा 'तान्यक्षराणि हृदये किमपि स्फुरन्ति' इतिवदतिशयोक्त्यानायख्येयतोक्ता सारभूततां प्रतिपादयितुमिति शिवम्।

किं लोचनं विना लोको भाति चन्द्रिकयापि हि।
तेनाभिनवगुप्तोऽत्र लोचनोन्मीलनं व्यधात्॥
यदुन्मीलनशक्त्यैव विश्वमुन्मीलति क्षणात्।
स्वात्मायतनविश्रान्तां तां वन्दे प्रतिभां शिवाम्॥

इति श्रीमहामाहेश्वराचार्यवर्याभिनवगुप्तोन्मीलिते सहृदयालोक(ध्वन्यालोक)लोचने ध्वनिसंकेते प्रथम उद्द्योतः।

या स्मर्यमाणा श्रेयांसि सूते ध्वंसयते रुजः।
तामभीष्टफलोदारकल्पवल्लीं स्तुवे शिवाम्॥

वृत्तिकारः संगतिमुद्द्योतस्य कुर्वाण उपक्रमते—**एवमित्यादि। प्रकाशित इति**। मया वृत्तिकारेण सतेति भावः। न चैतन्मयोक्तम्, अपि तु कारिकाकाराभिप्रायेणेत्याह—**तत्रेति**। द्विप्रकारप्रकाशने वृत्तिकारकृते यन्निमित्तं बीजभूतमिति संबन्धः। यदिवा तत्रेति पूर्वशेषः। तत्रेति प्रथमोद्द्योते वृत्तिकारेण प्रकाशितो विवक्षितवाच्यस्य यः प्रभेदोऽवान्तरप्रकारस्तत्प्रतिपादनायेदमुच्यते। तदवान्तरभेदप्रतिपादनद्वारेणैव चानुवादद्वारेणाविवक्षितवाच्यस्य यः प्रभेदो विवक्षितान्यपरवाच्यात्प्रभिन्नत्वं तत्प्रतिपादनायेदमुच्यते। भवति मूलतो द्विभेदत्वं कारिकाकारस्यापि संमतमेवेति भावः। संक्रमितमिति णिचा व्यञ्जनाव्यापारे यः सहकारिवर्गस्तस्यायं प्रभेद इत्युक्तम्। तिरस्कृतशब्देन च येन वाच्येनाविवक्षितेन सताविवक्षितवाच्यो ध्वनिर्व्यपदिश्यते तद्वाच्यं द्विधेति

१. 'अविवक्षितार्थं' क-ख.

१. 'लौकिकीयानां शब्दानां शास्त्रीयाणां' क-ख. २. 'इत्यतिशयो' क-ख. ३. 'साररूपतां' ग. ४. 'युक्त्यैव' क-ग. ५. 'चार्याभिनव' ग. ६. 'विरचिते काव्यालोकलोचने प्रथमः' ग. ७. 'एवमिति' ग. ८. 'भेदः' क-ख. ९. 'संक्रमितेपि णिचा व्यञ्जनव्यापारो यः' क-ख. १०. 'प्रभावः' क-ख. ११. 'अविवक्षितवाच्येनावस्थितेन सता' ग.



तथाविधाभ्यां च ताभ्यां व्यङ्ग्यस्यैव विशेष इति व्यङ्ग्यप्रकाशनपरस्य ध्वनेरेवायं प्रकारः।

तत्रार्थान्तरसंक्रमितवाच्यो यथा—

'स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घना
वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः।
कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे
वैदेही तु कथं भविष्यति हहा हा देवि धीरा भव॥'

संबन्धः। योऽर्थ उपपद्यमानोऽपि तावतैवानुपयोगाद्धर्मान्तरसंवलनयान्यतामिव गतोऽपि लक्ष्यमाणोऽनुगतधर्मी सूत्रन्यायेनास्ते स रूपान्तरपरिणत उक्तः। यस्त्वनुपपद्यमान उपायतामात्रेणार्थान्तरप्रतिपत्तिं कृत्वा पलायत इव स तिरस्कृत इति। ननु व्यङ्ग्यात्मनो यदा ध्वनेर्भेदो निरूप्यते तदा वाच्यस्य द्विधेति भेदकथनं न संगतमित्याशङ्क्याह—**तथाविधाभ्यां चेति**। च यस्मादर्थे। व्यञ्जकवैचित्र्याद्वियुक्तं व्यङ्ग्यवैचित्र्यमिति भावः। व्यञ्जके त्वर्थे यदि ध्वनिशब्दस्तदा न कश्चिद्दोष इति भावः। **तत्रार्थान्तरेति**। अत्र श्लोके रामशब्दसंगतिः। स्निग्धया जलसंबन्धसरसया श्यामलया द्रविडवनितोचितासितवर्णया कान्त्या कालवर्णेन लिप्तमाच्छुरितं वियन्नभो यैः। वेल्लन्त्यो विजृम्भमाणास्तथा चलन्त्यः परभागवशात्प्रहर्षवशाच्च बलाकाः सितपक्षिविशेषा येषु त एवंविधा मेघाः। एवं नभस्तावद्दुरालोकं वर्तते। दिशोऽपि दुःसहाः। यतः सूक्ष्मजलकणोद्गारिणो वाता इति मन्दमन्दत्वमेषामनियतदिग्भागगमनं च बहुवचनेन सूचितम्। तर्हि गुहासु कंचित्प्रविश्यास्यतामित्यत आह—पयोदानां ये सुहृदस्तेषु च तत्सु शोभनहृदया मयूरास्तेषामानन्देन हर्षेण कलाः षड्जसंवादिन्यो मधुराः केकाः शब्दविशेषाः। ताश्च सर्वं पयोदवृत्तान्तं दुःसहं स्मारयन्ति स्वयं च दुःसहा इति भावः। एवमुद्दीपनविभावोद्बोधितो विप्रलम्भः। परस्पराधिष्ठानत्वाद्रतेः। विभावानां साधारणतामभिमान्य

१. 'वाच्याभ्यां' क-ख. २. 'इति' क-ख-पुस्तकयोर्नास्ति.

१. 'अनुप्रयोगा' ग. २. 'धर्मिसूत्र' क-ख. ३. 'कथं' ग. ४. 'च' क-ग. ५. 'भावः। भेदप्रतिपादकेन·········नाम्ना·········णमपि सिद्धमित्यभिप्रायेणोदाहरणमाह' ग. ६. 'अर्थान्तरसंक्रमितवाच्यो यथेति' ग. ७. 'शब्द इति' ग. ८. 'कान्त्या चकाचकेनानुलिप्तं' ग. ९. 'वियत्' क-ख-पुस्तकयोर्नास्ति. १०. 'पूर्णहर्ष' क-ख. ११. 'येषु सत्सु' ग. १२. 'अपि' क-ख-पुस्तकयोर्नास्ति. १३. 'जलोद्गारिणः' ग. १४. 'दिगागमं बहु' क-ख. १५. 'संवादिनो' क-ख. १६. 'दुःसहं' ग-पुस्तके नास्ति. १७. 'उद्बोधितविप्र' ग. १८. 'साधारण्यं' ग.

इत्यत्र रामशब्दः। अनेन हि व्यङ्ग्यधर्मान्तररूपपरिणतः संज्ञी प्रत्याय्यते, न संज्ञामात्रम्।

यथा च ममैव विषमबाणलीलायाम्—

'[3]ताला जाअन्ति गुणा जाला दे सहिअएहिँ घेप्पन्ति।
रइकिरणानुग्गहिआइँ होन्ति कमलाइँ कमलाइं॥'

अत्र द्वितीयः कमलशब्दः।

---

इत एव प्रभृति प्रियतमां हृदये निधायैव स्वात्मवृत्तान्तं तावदाह—**कामं सन्त्विति**। दृढमिति सातिशयम्। **कठोरहृदय इति**। रामशब्दार्थध्वनिविशेषावकाशदानाय कठोरहृदयपदम्। यथा 'तद्गेहं' इत्युक्तेऽपि 'नतभित्ति' इति। अन्यथा रामपदं दशरथकुलोद्भवत्वकौसल्यास्नेहपात्रत्वबाल्यचरितजानकीलाभादिधर्मान्तरपरिणतमर्थं कथं न ध्वनेदिति। **अस्मीति**। स एवाहं भवामीत्यर्थः। भविष्यतीति क्रियासामान्यम्। तेन किं करिष्यतीत्यर्थः। अथ च भवनमेवास्या असंभाव्यमित्युक्तप्रकारेण हृदयनिहितां प्रियां स्मरणशब्दविकल्पपरम्परया प्रत्यक्षीभावितां हृदयस्फोटनोन्मुखीं ससंभ्रममाह—**हहा हेति**। **देवीति**। युक्तं तव धैर्यमित्यर्थः। **अनेनेति**। रामशब्देनानुपयुज्यमानेनार्थेनेति भावः। व्यङ्ग्यं धर्मान्तरप्रयोजनरूपं राज्यनिर्वासनाद्यसंख्येयम्। तच्चासंख्यत्वादभिधाव्यापारेणाशक्यसमर्पणम्। क्रमेणार्प्यमाणमप्येकधीविषयभावाभावान्न चित्रचर्वणापदमिति न चारुत्वातिशयकृत्। प्रतीयमानं तु तदसंख्यमनुद्भिन्नविशेषत्वेनैव किं किं रूपं न सहत इति चित्रपानकरसधूपगुडमोदकस्थानीयविचित्रचर्वणापदं भवति। यथोक्तम्—'उक्त्यन्तरेणाशक्यं यत्' इति। एष एव सर्वत्र प्रयोजनस्य प्रतीयमानत्वेनोत्कर्षहेतुर्मन्तव्यः। मात्रग्रहणेन संज्ञो नात्र तिरस्कृत इत्याह—**यथा चेत्यादि**। ताला तदा। जाला यदा। घेप्पन्ति गृह्यन्ते। अर्थान्तरन्यासमाह—**रविकिरणेति**। कमलशब्दो लक्ष्मीपात्रत्वादिधर्मान्तरशतचित्रतापरिणतं संज्ञिनमाहेत्यर्थः। तेन शुद्धेऽर्थे मुख्ये बाधा निमित्तं तत्रार्थे तद्धर्मिसमवायः। तेन निमित्तेन रामशब्दो धर्मान्तरपरिणतमर्थं लक्षयति। व्यङ्ग्यान्यसाधारणान्यशब्दवाच्यानि धर्मान्तराणि। एवं कमलशब्दः।

---

१. 'इत्यत्रानेन रामशब्देन हि' क-ख. २. 'संज्ञि' ग. ३. 'तदा जायन्ते गुणा यदा ते सहृदयैर्गृह्यन्ते। रविकिरणानुगृहीतानि भवन्ति कमलानि कमलानि॥' इति च्छाया.

---

१. 'एव इतः' क-ख. २. 'अपि' ग-पुस्तके नास्ति. ३. 'इत्यादि' ग. ४. 'परिचित' ग. ५. 'न' ग-पुस्तके नास्ति. ६. 'धर्मान्तरं' क-ख. ७. 'अशक्यत्वात्' क-ख. ८. 'चित्रं' क-ख. ९. 'कुलकामोदस्थानीयं' क-ख. १०. 'परं' ग. ११. 'घेव्वन्ति' ग. १२. 'शब्द इति' ग. १३. 'शुद्धोक्ते' क-ख. १४. 'असाधारणान्य' ग. १५. 'शब्दे' क-ख.



अत्यन्ततिरस्कृतवाच्यो यथादिकवेर्वाल्मीकेः—

'रविसंक्रान्तसौभाग्यस्तुषारावृतमण्डलः।
निःश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते॥' इति।

अत्रान्धशब्दः।

'गअणं च मत्तमेहं धारालुलिअज्जुणाइँ अ वणाइं।
णिरहंकारमिअङ्का हरन्ति णीलाओ वि णिसाओ॥'

अत्र मत्तनिरहंकारशब्दौ।

---

गुणशब्दस्तु संज्ञिमात्रमाहेति। तत्र तद्बलात्कैश्चिदारोपितं तदप्रातीतिकम्। अनुपयोगबाधितो ह्यर्थोऽस्य ध्वनेर्विषयो लक्षणामूलस्य। यत्तु हृदयदर्पण उक्तम्—'हहा हेति। संरम्भार्थोऽयं चमत्कारः' इति। तत्रापि संरम्भ आवेगो विप्रलम्भव्यभिचारीति रसध्वनिस्तावदुपगतः। न च रामशब्दाभिव्यक्त्यार्थसाहायकेन विना संरम्भोल्लासोऽपि। अहं सहे तस्याः किं वर्तत इत्येवमात्मा हि संरम्भः। कमलपदे च कः संरम्भ इत्यास्तां तावत्। अनुपयोग्यात्मिका च मुख्यार्थबाधात्रास्तीति लक्षणामूलत्वादविवक्षितवाच्यभेदतास्योपपन्नैव। शुद्धार्थस्याविवक्षणात्। न च तिरस्कृतत्वं शुद्धस्य। तस्यापि तावत्यनुगमात्। अत एव च परिणतवाचोयुक्त्या व्यवहृतम्—**अत्यन्तेत्यादि**। आदिकवेरिति ध्वनेर्लक्ष्यप्रसिद्धतामाह। **रवीति**। हेमन्तवर्णने पञ्चवट्यां रामस्योक्तिरियम्। अन्ध इति चोपहतदृष्टिः। जात्यन्धस्यापि गर्भे दृष्टेरुपघातात्। अन्धोऽयं पुरोऽपि न पश्यतीत्यतस्तत्र तिरस्कारोऽन्धार्थस्य न त्वत्यन्तम्। इह त्वादर्शस्यान्धत्वमारोप्यमाणमपि न सह्यमिति। अन्धशब्दोऽत्र पदार्थस्फुटीकरणाशक्तत्वं नष्टदृष्टिगतं निमित्तीकृत्यादर्शलक्षणया प्रतिपादयति। असाधारणविच्छायत्वानुपयोगित्वादिधर्मजातमसंख्यं प्रयोजनं व्यनक्ति। भट्टनायकेन तु यदुक्तम्—'इवशब्दयोगाद्गौणताप्यत्र न काचित्' इति, तच्छ्लोकार्थमपरामृश्य। आदर्शचन्द्रमसोर्हि सादृश्यमिवशब्दो द्योतयति। निःश्वासान्ध इति चादर्शविशेषणम्। इवशब्दस्यान्धार्थत्वेन योजने आदर्शश्चन्द्रमा इत्युदाहरणं भवेत्। योजनं चैतदिवशब्दस्य क्लिष्टम्। न च निःश्वासेनान्ध इवादर्शः स इव चन्द्र इति कल्पना युक्ता। जैमिनीयसूत्रे ह्येवं योज्यते न काव्येऽपीत्यलम्। **गअणमिति**। '[गगनं च मत्तमेघं धा-

---

१. 'वाच्यार्थो ध्वनिर्यथा' ग. २. 'इति' क-ख-पुस्तकयोर्नास्ति. ३. 'यथा च श्लोकः गअणं च' ग. ४. 'लीलाइ वि' क-ख.

---

१. 'लक्षणामूलं ह्यस्य' क-ख. २. 'कमलशब्देन च' ग. ३. 'अविवक्षितत्वात्' ग. ४. 'धर्मिरूपेण' ग. ५. 'च' ग-पुस्तके नास्ति. ६. 'वचो' क-ख. ७. 'अत्यन्तेत्यादि' ग-पुस्तके नास्ति. ८. 'रतिसंक्रान्त—श्लोकः' ग. ९. 'इत्युपसंहृत' क-ख. १०. 'दृष्टेरुपघातात्' क. ११. 'अन्वर्थस्य' क-ख. १२. 'न दृष्टदृष्टिगतत्वं' क-ख. १३. 'आदर्शत्वं' क-ख. १४. 'धर्मान्तमसंख्यं' ग. १५. 'सूत्रं—काव्यमित्यलं' ग. १६. 'यथा चेति' ग.

'असंलक्ष्यक्रमोद्द्योतः क्रमेण द्योतितः परः।
विवक्षिताभिधेयस्य ध्वनेरात्मा द्विधा मतः ॥ २ ॥'

मुख्यतया प्रकाशमानो व्यङ्ग्योऽर्थो ध्वनेरात्मा। स च वाच्यार्थापेक्षया कश्चिदलक्ष्यक्रमतया [1]तुल्यं प्रकाशते, कश्चित्क्रमेणेति द्विधा मतः।

तत्र

'रसभावतदाभासतत्प्रशान्त्यादिरक्रमः।
ध्वनेरात्माङ्गिभावेन भासमानो व्यवस्थितः ॥ ३ ॥'

---

रालुलितार्जुनानि च वनानि। निरहंकारमृगाङ्का हरन्ति नीला अपि निशाः॥' इतिच्छाया।] चशब्दोऽपिशब्दार्थे। गगनमपि मत्तमेघमपि न केवलं तारकितम्। धारालुलितार्जुनवृक्षाण्यपि वनानि न [1]केवलं मलयमारुतान्दोलितसहकाराणि। निरहंकारमृगाङ्का नीला अपि निशा न केवलं [2]सितकरकरधवलिता हरन्ति। उत्सुकयन्तीत्यर्थः। मत्तशब्देन [3]सर्वथैवेहासंभवत्स्वार्थेन बाधितमद्योपयोगक्षी[4]बात्मकमुख्यार्थेन सदृशान्मेघांल्लक्षयतासमञ्जसकारित्वदुर्निवारत्वादिधर्मसहस्रं ध्वन्यते। निरहंकारशब्देनापि चन्द्रं लक्षयता तत्पारतन्त्र्यवि[5]च्छायत्वानुजिगमिषारूपजिगीषात्यागप्रभृतिर्ध्व[6]न्यते। अविवक्षितवाच्यस्य प्रभिन्नत्वमिति यदुक्तं तत्[7]कुतो भवतीत्याशङ्क्य विवक्षितवाच्यादेवास्य भेदो भवति। विवक्षा तदभावयोर्विरोधादित्यभिप्रायेणाह—**असंलक्ष्येति**। सम्यङ् न लक्षयितुं शक्यः क्रमो यस्य तादृश [8]उद्द्योत उद्द्योतनव्यापारोऽस्येति [9]बहुव्रीहिगर्भो बहुव्रीहिः। ध्वनिशब्दसांनिध्याद्विवक्षिताभिधेयत्वेनान्य[10]परत्वमत्राक्षिप्तमिति स्वकण्ठेनोक्तम्। **ध्वनेरिति**। व्यङ्ग्यस्येत्यर्थः। **आत्मेति**। पूर्वश्लोकेन व्यङ्ग्यस्य वाच्यमुखेन भेद उक्तः। इदानीं तु द्योतनव्यापार[11]मुखेन द्योत्यस्य [12]स्वार्थनिष्ठ एवेत्यर्थः। व्यङ्ग्यस्य [13]ध्वनेर्द्योतने स्वात्मनि कः क्रम इत्याशङ्क्याह—**वाच्यार्थापेक्षयेति**। वाच्योऽर्थो विभावादिः। **तत्रेति**। तयोर्म[14]ध्यादित्यर्थः। यो रसादिरर्थः स एव [15]क्रमो ध्वनेरात्मा न त्वक्रम [16]एव सः। अक्रमत्वमपि

---

१. 'तुल्यं' ग-पुस्तके नास्ति.

---

१. 'केवलमन्दमारुता' ग. २. 'सितकिरणधवलिता' ग. ३. 'सर्वथैव' ग-पुस्तके नास्ति. ४. 'क्षेमात्मक' क-ख. ५. 'विच्छायत्वोज्जिगमिषा' क-ख. ६. 'ध्वन्यते' ग-पुस्तके नास्ति. ७. 'कुतो नहि स्वरूपादेव भेदो भविष्यति–' क-ख. ८. 'उद्द्योत' इति क-ख-पुस्तकयोर्नास्ति. ९. 'बहुव्रीहिगर्भो' इति क-ख-पुस्तकयोर्नास्ति. १०. 'परमप्याक्षिप्तं' क-ख. ११. 'भेदेन' क-ख. १२. 'स्वात्मनिष्ठ' क-ख. १३. 'ध्वनेर्द्योतने' क-ख-पुस्तकयोर्नास्ति. १४. 'मध्यं' ग. १५. 'अक्रमो' ग. १६. 'एव सक्रमत्वमपि' क-ख.



हि तस्य कदाचिद्भवति। [1]तदा चार्थशक्त्युद्भवानुस्वानरूप[2]भेदेनेति वक्ष्यते। आत्मशब्दः स्वभाववचनः प्रकारमाह। तेन [3]रसादिर्योऽर्थः स ध्वनेरक्रमो नामभेदः। असंलक्ष्यक्रम इति यावत्। [4]ननु किं [5]सर्वदैव रसादिरर्थो ध्वनेः प्रकारः। नेत्याह—**[6]भासमान इति**। किं तु [7]यदाङ्गित्वेन प्रधानत्वेनावभासमानः। एतच्च सामान्यलक्षणे [8]गुणीकृतस्वार्थावित्यत्र यद्यपि निरूपितम्, तथापि [9]रसवदाद्यलंकारप्रकाशनावकाशदानायोदितम्। स च रसादिध्वनिव्यवस्थित एव। नहि तच्छून्यं [10]काव्यं किंचिदस्ति। यद्यपि [11]च रसेनैव सर्वं जीवति काव्यम्, तथापि तस्य रसस्यैकघनचमत्कारात्मनोऽपि कुतश्चिदंशात्प्रयोजकीभूतादधिकोऽसौ चमत्कारो[12]ऽपि भवति। तत्र यदा कश्चिदुद्रिक्तावस्थां प्रति[13]पन्नो व्यभिचारी चमत्कारातिशयप्रयोजको भवति तदा भावध्वनिः। यथा—'तिष्ठेत्कोपवशात्प्रभावपिहिता दीर्घं न सा कुप्यति स्वर्गायोत्पतिता भवेन्मयि पुनर्भावार्द्रमस्या मनः। तां हर्तुं विबुधद्विषोऽपि न च मे शक्ताः पुरोवर्तिनीं सा चात्यन्त[14]मगोचरं नयनयोर्यातेति कोऽयं विधिः॥' अत्र हि विप्रलम्भ[15]रससद्भावेऽपीयति वितर्काख्यव्यभिचारिचमत्क्रियाप्रयुक्त आस्वादातिशयः। व्यभिचारिण उदयस्थित्यपायत्रिधर्मकाः। यदाह—'विविधमाभिमुख्येन चरन्तीति व्यभिचारिणः' [16]इति। तत्रोदयावस्थाप्रयुक्तः कदाचित्, यथा—'याते गोत्रविपर्यये श्रुतिपथं शय्याम[17]नुप्राप्तया [18]निर्ध्यातं परिवर्तनं पुनरपि प्रारब्धमङ्गीकृतम्। भूयस्तत्प्रकृतं कृतं च [19]शिथिलक्षिप्तैकदोर्लेखया तन्वङ्ग्या न तु पारितः स्तनभरः क्रष्टुं प्रियस्योरसः॥' अत्र हि प्रणयकोपस्यैवोज्जिगमिषयैव यदवस्थानं न तु पारित इत्युदयावकाशनिराकरणात्तदे[20]वास्वादजीवितम्। स्थितिः पुनरुदाहृता 'तिष्ठेत्कोपवशात्–' इत्यादिना। क्वचित्तु व्यभिचारिणः प्रशमावस्थया प्रयुक्तश्चमत्कारः। यथोदाहृतं प्राक् 'एकस्मिञ्शयने पराङ्मुखतया–' इति। [21]अयं तत्प्रशम इत्युक्तः। अत्र चेर्ष्याविप्रलम्भस्य रसस्यापि प्रशम इति शक्यं योजयितुम्। क्वचि[22]त्तु व्यभिचारिणः संधिरेव चर्वणास्पदम्। यथा—'[23]ईसंसु केसुम्भिआए मह चुम्बिउ जेण। अमिअरसो घोण्टाण पडिजाणिउ तेण॥ (?) [24]त्यक्ते तु कोपे कोपकषायगद्गदमन्दरुदिताया

---

१. 'तथा' ग. २. 'भेदतेति' क-ख. ३. 'रसादिभ्योऽर्थः' क-ख. ४. 'ननु' ग-पुस्तके नास्ति. ५. 'सदैव' ग. ६. 'भासमान इति' ग-पुस्तके नास्ति. ७. 'यदङ्गित्वेन' क-ख. ८. 'गुणीभूत' क-ख. ९. 'रसवदाद्यलंकारतत्त्वप्रकटनायावकाशदानायानूदितम्' क-ख. १०. 'काव्यं' क-ख-पुस्तकयोर्नास्ति. ११. 'च' ग-पुस्तके नास्ति. १२. 'अपि' ग-पुस्तके नास्ति. १३. 'अप्रतिपन्नो' ग. १४. 'अदर्शनं' ग. १५. 'रस' क-ख-पुस्तकयोर्नास्ति. १६. 'इति' क-ख-पुस्तकयोर्नास्ति. १७. 'अनुप्राप्तयोर्निर्वातं' ग. १८. 'निर्ध्यातं' क. १९. 'शिथिलं' ग. २०. 'आह्लाद' ग. २१. 'योऽयं' ग. २२. 'तु' क-ख-पुस्तकयोर्नास्ति. २३. 'सुरसुंभिआइ सहु चुंविते जेण अपहु अव्वोट्ट ढाहजतजाणित्ते तेन' क-ख. २४. 'त्यक्तेऽपि कोपकषाय' क-ख.

येन मुखं चुम्बितं ते[1]नामृतरसनिगरणविश्रान्तिपरम्पराणां तृप्तिर्जा[2]तेति कोपप्रसादसंधिश्चमत्कारस्थानम्। क्वचिद्व्यभिचार्यन्तरशबलतैव विश्रान्तिपदम्। यथा—'क्वाकार्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा दोषाणां प्रशमाय मे श्रुतमहो कोपेऽपि कान्तं मुखम्। किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेऽपि सा दुर्लभा चेतः स्वास्थ्यमुपेहि कः खलु युवा धन्योऽधरं धास्यति ॥' अत्र हि वितर्कौत्सुक्ये मतिस्मरणे शङ्कादैन्ये [3]स्मृतिचिन्तने परस्परं बाध्यबाधकभावेन द्वन्द्वशो भ[4]वन्ती पर्यन्ते तु चिन्ताया एव प्रधानतां ददती परमा[5]स्वादस्थानम्। एवमन्य[6]दप्युत्प्रेक्ष्यम्। एतानि चोदयसंधिशबलत्वादिकानि कारिकायामादिग्रहणेन गृहीतानि। नन्वेवं विभावानुभावमुखेनाप्यधिकश्चमत्कारो दृश्यत इति विभावध्वनिरनुभावध्वनिश्च वक्तव्यः। मैवम्। विभावानुभावौ तावत्स्वशब्दवाच्यावेव। तच्चर्वणापि चित्तवृत्तिष्वेव पर्यवस्यतीति रसभावेभ्यो ना[7]धिकं चर्वणीयम्। य[8]दि तु विभावानुभावावे[9]पि व्यङ्ग्यौ भवतस्तदा वस्तुध्वनि[10]रपि किं न सह्यते। यदा तु वि[11]भावानुभावाभासाद्रत्याभासोदयस्तदा विभावानुभावा[12]भासाच्चर्वणाभास इति रसाभासस्य विषयः। यथा रावणकाव्याकर्णने शृङ्गाराभासः। यद्यपि 'शृङ्गारानुकृतिर्या तु स हासः' इति मुनिना निरूपितं तथाप्यौत्तरकालिकं त[13]त्र हास्यरसत्वम्। 'दूराकर्षणमोहमन्त्र इव मे तन्नाम्नि याते श्रुतिं चेतः कालकलामपि प्रकुरुते नावस्थितिं तां विना।' इत्यत्र तु न हास्यचर्वणावसरः। ननु नात्र रतिः स्थायिभावोऽस्ति। प[14]रस्परास्थाबन्धाभावात्। केनैतदुक्तं रतिरिति। रत्याभासो हि सः। अतश्चा[15]भासो येनास्य सीता म[16]य्युपेक्षिका द्विष्टा वेति प्रतिपत्ति[17]र्हृदयं न स्पृशत्येव। त[18]त्स्पर्शे हि तस्याप्यभिलाषो वि[19]लीयेत। न च मयीयमनुरक्तेत्यपि निश्चयेन कृतं कामकृतान्मोहात्। अत एव तदाभासत्वम्। वस्तुतस्तन्न स्थाप्यते। शुक्तौ रजताभासवत्। ए[20]तच्च शृङ्गारा[21]नुकृतिं प्रयुञ्जानो मुनिरपि सूचितवान्। अनुकृतिरमुख्यता आभास इति ह्येकोऽर्थः। अत एवाभिलाषे एकतरनिष्ठेऽपि शृङ्गारशब्देन त[22]त्र तत्र व्यवहारस्तदाभासतया म[23]न्तव्यः। शृङ्गारेण वीरादीनाम[24]प्याभासरूपतोपलक्षितैव। एवं रसध्वनेरे[25]कस्यैवामी भावध्वनिप्रभृतयो निः[26]ष्यन्दा आस्वादे

१. 'तेनामृतस्य रसविश्रान्तिनिगरणपरम्पराणां' क-ख. २. 'जातेति' ग. ३. 'वृत्तचिन्तने' क-ख. ४. 'भवन्ति तत्पर्यन्ते—ददति' ग. ५. 'आह्लाद' ग. ६. 'अपि' क-ख-पुस्तकयोर्नास्ति. ७. 'न' ग-पुस्तके नास्ति. ८. 'यदा' ग. ९. 'एव' ग. १०. 'अपि' ग-पुस्तके नास्ति. ११. 'विभावाभासरत्याभासादयः' ग. १२. 'भासाश्चर्वे' क-ग. १३. 'तु' क-ख. १४. 'परस्परावस्थाबाधाभावात्' क-ख. १५. 'आभासतः' ग. १६. 'उपेक्षिता' ग. १७. 'न हृदयं न च' क-ख. १८. 'तत्स्वशोभितस्यापि' ग. १९. 'लीयेत' क-ख. २०. 'अतश्च' क-ख. २१. 'नुकृतिर्यथाशब्दं प्रयुञ्जानो' ग.—२२. एकवारमेव तत्रेति क-ख-पुस्तकयोः. २३. 'मन्तव्यम्' ग. २४. 'अपि' क-ख-पुस्तकयोर्नास्ति. २५. 'एकस्य' क-ख-पुस्तकयोर्नास्ति. २६. 'निःष्यन्द आस्वादे प्रधानम्' क-ख.



रसादिरर्थो हि सहैव वाच्येनावभासते। स चाङ्गित्वेना[1]वभासमानो ध्वनेरात्मा।

इदानीं रसवद[2]लंकारादलक्ष्यक्रमद्योतनात्मनो ध्वनेर्विभक्तो विषय इति प्रदर्श्यते—

'वाच्यवाचकचारुत्वहेतूनां विविधात्मनाम्।
रसादिपरता यत्र स ध्वनेर्विषयो मतः ॥ ४ ॥'

---

प्रयोजनम्। प्रयोजकमेवमेव भावादिकमंशं विभज्य पृ[1]थग्व्यङ्ग्यं स्थाप्यते। यथा गन्धयुक्तिज्ञैरेकसंमूर्छितामोदोपभोगे[2]ऽपि शुद्धमांस्यादिप्रयुक्तमिदं सौरभमिति। रसध्वनिस्तु स एव यो[3]ऽत्र मुख्यतया विभावानुभावव्यभिचारिसंयोजनोदितस्थायिप्रतिपत्तिकस्य प्रतिपत्तुः स्थाय्यंशचर्वणाप्रयुक्त एवास्वादप्रकर्षः। यथा—'कृ[4]च्छ्रेणोरुयुगं व्यतीत्य सुचिरं भ्रान्त्वा नितम्बस्थले मध्येऽस्यास्त्रिवलीतरङ्गविषमे निःस्पन्दतामागता। मद्दृष्टिस्तृषितेव संप्रति शनैरारुह्य तुङ्गौ स्तनौ साकाङ्क्षं मुहुरीक्षते जललवप्रस्यन्दिनी लोचने ॥' अत्र हि ना[5]यिकानुवर्ण्यमानस्वात्मप्रकृतिपविचित्रितचित्रफलकावलोकनाद्वत्सराजस्य परस्परावस्थाबन्धरूपो रतिस्थायिभावो विभावानुभावसंयोजनवशेन चर्वणारूढ इति। तदलं बहुना। स्थितमेतत्—रसादिरर्थोऽङ्गित्वेन भासमानोऽसंलक्ष्यक्रमव्यङ्ग्यस्य ध्वनेः प्रकार इति। **सहैवेति**। इवशब्देन संलक्ष्यता विद्यमानत्वेऽपि क्रमस्य व्याख्याता। **वाच्येनेति**। विभावानुभावादिना। नन्वङ्गित्वेनावभासमान इत्युच्यते तत्राङ्गत्वमपि किमस्ति रसादेर्येन तन्निराकरणायैतद्विशेषणमित्यभिप्रायेणोपक्रमते—**इदानीमि[6]त्यादिना**। अङ्गत्वम[7]स्ति रसादीनां रसवत्प्रे[8]यऊर्जस्विसमाहितालंकाररूपतायामिति भावः। अनया च[9] भङ्ग्या रसवदादिष्वलंकारेषु रसादिध्वनेर्नान्तर्भाव इति सू[10]चयति। **वाच्येति**। पूर्वं हि समासोक्त्यादिषु वस्तुध्वनेर्नान्तर्भाव इति दर्शितम्। वाच्यं च वाचकं च तच्चारुत्वहेतवश्चेति द्वन्द्वः। वृत्तावपि शब्दाश्चार्थाश्चालंकाराश्चेति द्व[11]न्द्वः। **मत इति**। पूर्वमेवैतदुक्तमित्यर्थः। ननूक्तं भट्टनायकेन—"रसो यदा परगततया प्रतीयते त[12]र्हि ताटस्थ्यमेव

१. 'अव' क-ख-पुस्तकयोर्नास्ति. २. 'अलंकारादौ' क-ख.

१. 'पृथग्व्यवस्थाप्यते' क-ख. २. 'भोगोपरि' क-ख. ३. 'यत्र' क-ख. ४. 'कृच्छ्रात्' ग. ५. 'नायिकाकारानु' क-ख. ६. 'आदिना' ग-पुस्तके नास्ति. ७. 'अपि' क-ख. ८. 'प्रेयस्व्यूर्जस्वि' क-ख. ९. 'च' क-ख-पुस्तकयोर्नास्ति. १०. 'सूचयति' इत्यारभ्य 'नान्तर्भाव इति' इतिपर्यन्तं क-ख-पुस्तकयोर्नास्ति. ११. 'द्वन्द्वः' क-ग-पुस्तकयोर्नास्ति. १२. 'तत्' ग.

स्यात्। न च स्वगतत्वेन रामादिचरितमयात्काव्यादसौ प्रतीयते। स्वात्मगतत्वेन च प्रतीतौ स्वात्मनि [1]रसस्योत्पत्तिरेवाभ्युपगता स्यात्। सा चायुक्ता। सामाजिकं प्रत्यविभावत्वात्। कान्तात्वं साधारणं वासनाविकासहेतुर्विभावतायां प्रयोजकमिति चेत्, देवतावर्णनादौ तदपि कथम्। न च स्वकान्तास्मरणं मध्ये संवेद्यते। अलोकसामान्यानां च रामादीनां ये समुद्रसेतुबन्धादयो विभावास्ते कथं साधारण्यं भजेयुः। न [2]चोत्साहादिमात्रं स्मर्यते। अननु[3]रूपत्वात्। शब्दादपि तत्प्रतिपत्तौ [4]न रसोपजनः। प्रत्यक्षादिव नायकमिथुनप्रतिपत्तौ। उत्पत्तिपक्षे च करुणस्योत्पादाद्[5]दुःखित्वे करुणप्रेक्षासु पुनरप्रवृत्तिः स्यात्। [6]तन्न। उत्पत्तिरपि नाप्यभिव्यक्तिः। शक्तिरूपस्य हि शृङ्गारस्याभिव्यक्तौ विषयार्जनतारतम्यप्रवृत्तिः स्यात्। तत्रापि [7]किं स्वगतोऽभिव्यज्यते [8]परगतो वेति पूर्ववदेव दोषः। तेन न प्रतीयते नोत्पद्यते नाभिव्यज्यते काव्येन रसः। किं त्वन्यशब्दवैलक्षण्यं काव्यात्मनः शब्दस्य। त्र्यंशताप्रसादात्। तत्राभिधायकत्वं वाच्यविषयम्, भावकत्वं [9]रसादिविषयम्, भोक्तृत्वं सहृदयविषयमिति त्रयोंऽशभूता व्यापाराः। तत्राभिधाभागो [10]यदि शुद्धः स्या[11]त्तत्तन्त्रादिभ्यः शास्त्रन्यायेभ्यः [12]श्लेषाद्यलंकाराणां को[13] भेदः। वृत्तिभेदवैचित्र्यं [14]चाकिंचित्करम्। श्रुतिदुष्टादिवर्जनं च किमर्थम्। तेन रसभावनाख्यो द्वितीयो व्यापारः। यद्वशादभिधापि लक्षणैव। तच्चैतद्भावकत्वं नाम [15]यत्काव्यस्य तद्विभावादीनां साधारणत्वापा[16]दनं नाम। भाविते च रसे तस्य भोगः। यो[17]ऽनुभवस्मरणप्रतिपत्तिभ्यो विलक्षण एव [18]द्रुतिविस्तरविकासनामा रजस्तमोवैचित्र्याननुविद्ध[19]सत्त्वमयनिजचित्स्वभावनिर्वृति[20]द्रुतिविश्रान्तिलक्षणः परब्रह्मास्वाद[21]सचिवः। स एव च [22]प्रधानभूतोंऽशः सिद्धिरूप इति। व्युत्पत्तिर्नामाप्रधानमेवेति।" अत्रोच्यते—रसस्वरूप एव तावद्विप्रतिपत्तयः प्रतिवादिनाम्। तथाहि पूर्वावस्थायां यः स्थायी स एव व्यभिचारिसंपातादिना प्राप्तपरिपोषोऽनुकार्यगत एव रसः। नाट्ये [23]तु प्रयुज्यमानत्वान्नाट्यरस इति केचित्। प्रवाहधर्मिण्यां चित्तवृत्तौ [24]चित्तवृत्तेर्वृत्त्यन्तरेण कः परिपोषार्थः। विस्मयशोकक्रोधादेश्च क्रमेण तावन्न परिपोष इति नानुकार्यो रसः। [25]नानुकर्तरि च तद्[26]भावेन लयाद्यनुकरणं स्यात्। सामाजिकगते वा क-

१. 'रसस्यैव' क-ख. २. 'उत्साहादिमान् रामः' क-ख. ३. 'भूतत्वात्' क-ख. ४. 'न' क-ख-पुस्तकयोर्नास्ति. ५. 'अदुःखित्वे' ग. ६. 'तन्न' इत्यारभ्य 'स्यात्' इत्यन्तं क-ख-पुस्तकयोर्नास्ति. ७. 'च किं न स्वगतो व्यज्यते' क-ख. ८. 'परगतो' इत्यारभ्य 'नाभिव्यज्यते' इत्यन्तं क-ख-पुस्तकयोर्नास्ति. ९. 'रसविषयम्' ग. १०. 'ऽयमशुद्धः' ग. ११. 'तत्' ग-पुस्तके नास्ति. १२. 'श्लेषालंकाराणां' ग. १३. 'एको भेदः' ग. १४. 'चापि किंचित्' क-ख. १५. 'यः' क-ख. १६. 'पादनाधाम' ग. १७. 'अनुभाव' क-ख. १८. 'दूती' ग. १९. 'विशुद्ध' ग. २०. 'श्रुति' क-ख-पुस्तकयोर्नास्ति. २१. 'सविधः' क-ख. २२. 'प्रधानरूपोशेषसिद्ध' ग. २३. 'तु' क-ख-पुस्तकयोर्नास्ति. २४. 'चित्तवृत्त्यन्तरेण' ख. २५. 'न' क-ख-पुस्तकयोर्नास्ति. २६. 'भावेलयाद्यनुसरणं' क-ख.



चमत्कारः। प्रत्युत करुणादौ दुःखप्राप्तिः। तस्मान्नायं पक्षः। कस्तर्हि। इहानन्त्यान्नियतस्यानुकारो न शक्यः, निष्प्रयोजनश्च विशिष्टताप्रतीतौ। ताटस्थ्येन व्युत्पत्त्यभावात्। [1]तस्मादनियतावस्थात्मकं स्थायिनमुद्दिश्य विभावानुभावव्यभिचारिभिः संयुज्यमा[2]नोऽयं रामः सुखीति स्मृतिविलक्षणा स्थायिनि प्रतीतिगोचरतयास्वाद[3]रूपा प्रतिपत्तिरनुकर्त्रा[4]लम्बना नाट्यैकगामिनी रसः। स च [5]न व्यतिरि[6]क्तमाधारमपेक्षते। किं त्वनुकार्याभिन्नाभिमते नर्तके आस्वादयिता सामाजिक इत्येतावन्मा[7]त्रमदः। तेन नाट्य एव [8]रसः, नानुकार्यादिष्विति [9]केचित्। अन्ये तु—अनुकर्तरि यः स्थाय्यवभासोऽभिनयादिसामग्र्यादिकृतो भि[10]त्ताविव हरितालादिना स्वावभासः स एव लोकातीततयास्वादापरसंज्ञया प्रतीत्या रस्यमानो रस इति नाट्याद्रसा नाट्यरसाः। अपरे पु[11]नर्विभावमनुभावमेव विशिष्टसामग्र्या समर्प्यमाणं तद्विभावनीयानुभावनीयस्थायिरूपचित्तवृ[12]त्त्युपचितवासनानु[13]षक्तं स्वनिर्वृति[14]चर्वणाविशिष्टमेव रसः। [15]तन्नाट्यमेव रसाः। अन्ये तु शुद्धं विभावम्, [16]अपरे शुद्धमनुभावम्, [17]केचित्तु स्थायिमात्रम्, इतरे [18]व्यभिचारिणम्, अन्ये [19]तत्संयोगम्, एकेऽनुकार्यम्, [20]केचन सकलमेव समुदायं रसमाहुरित्यलं बहुना। काव्येऽपि च लोकनाट्य[21]धर्मिस्थानीये स्वभावोक्तिवक्रोक्तिप्रकारद्वयेनालौकिकप्रसन्नमधुरौजस्विशब्दसमर्प्यमाणविभावादियोगादियमेव [22]रसवार्ता। अस्तु वा नाट्याद्विचि[23]त्ररूपा रसप्रतीतिः। उपायवैलक्षण्यादियमेव तावदत्र सरणिः। एवं स्थिते प्रथमपक्ष एवैतानि दूषणानि। प्रतीतेः स्वपर[24]गतत्वादिविकल्पने [25]सर्वपक्षेषु प्रतीतिरपरिहार्या। रसस्य [26]प्रतीतं हि पिशाचवदव्यवहार्यं [27]स्यात्। किं तु [28]यथा प्रतीतिमात्रत्वेनाविष्टत्वेऽपि [29]प्रात्यक्षिकी आनुमानिकी [30]आगमोत्था प्रतिभानकृता योगि[31]प्रत्यक्षजा च प्रतीतिरुपायवैलक्षण्यादन्यैव तद्वदियमपि प्रतीतिश्चर्वणास्वादनभोगापरनामा [32]भवतु। तन्निदानभूताया [33]हृदयसंवादाद्युपकृताया विभावादिसामग्र्या लोकोत्तररूपत्वाद्रसाः प्रतीयन्त इति। ओदनं पचतीतिवद्व्यवहारः प्रतीयमान एव हि [34]रसः।

१. 'तस्मान्नियतात्मकं' ग. २. 'मानोऽयं रसः' क, 'मानोऽयं रामः' ख. ३. 'रूपप्रति' क-ख. ४. 'लम्बनानास्यैक' क, 'लम्बनाद्यैक' ग. ५. 'न' ग-पुस्तके नास्ति. ६. 'रिक्तसाधारणमपे' क-ख. ७. 'मात्रभेदः' ख. ८. 'रसाः' ग. ९. 'केचित्' क-ख-पुस्तकयोर्नास्ति. १०. 'भिन्नव्यवहारतालादिना' क-ख. ११. 'तु' ग. १२. 'वृत्त्युचित' क-ख. १३. 'सक्तं' क-ख. १४. 'चर्वणाविष्टं' क-ख. १५. 'तन्नाट्यमेव रसाः' क-ख-पुस्तकयोर्नास्ति. १६. 'अपरे तु' ग. १७. 'केचित्स्थायि' क-ख. १८. 'व्यभिचारिणः' ग. १९. 'तत्त्वसंयोगं' ग. २०. 'केचित्' ग. २१. 'धर्मे स्थानीयेन' क-ख. २२. 'रसवार्तास्तु। तत्र' क-ख. २३. 'विरचितरूपा' ग. २४. 'गतादि' क-ख. २५. 'नसर्वपक्षेषु च' क-ख. २६. 'अप्रतीतं' क-ख. २७. 'स्यात्' क-ख-पुस्तकयोर्नास्ति. २८. 'यया' ख. २९. 'प्रात्यक्षी' क-ख. ३०. 'आगमोर्था' क-ग. ३१. 'प्रत्यक्षजाता प्रतीति' क-ख. ३२. 'भवतु' ग-पुस्तके नास्ति. ३३. 'सहृदय' क-ख. ३४. 'रसप्रतीतिरेव' क-ख.

प्रतीतिरेव विशिष्टा रसना । सा च नाट्ये लौकिकानुमानप्रतीतेर्विलक्षणतां प्रमुखे उपायतया संदधाना । एवं काव्ये शाब्दप्रतीतेश्च विलक्षणतां प्रमुखतामुपेक्ष्यमाणा । तस्मादनुत्थानोपहतः पूर्वपक्षः । रामादिचरितं तु न सर्वस्य हृदयसंवादीति महत्साहसम् । चित्रवासनाविशिष्टत्वाच्चेतसः । यदाह—'तासामनादित्वं चात्मनो नित्यत्वात् । जातिदेशकालव्यवहितानामप्यानन्तर्यं स्मृतिसंस्कारयोरेकरूपत्वात्' इति । तेन प्रतीतिस्तावद्रसस्य सिद्धा । सा च रसनारूपा प्रतीतिरुत्पद्यते । वाच्यवाचकयोस्तत्राभिधादिविविक्तो व्यञ्जनात्मा ध्वननव्यापार एव । भोगीकरणव्यापारश्च काव्यात्मकरसविषयो ध्वननात्मैव । नान्यत्किंचित् । भावकत्वमपि समुचितगुणालंकारपरिग्रहात्मकमस्माभिरेव वितत्य वक्ष्यते । किमेवमपूर्वं काव्यं च रसान्प्रति भावकत्वमिति यदुच्यते तत्र भवत इति भावनादुत्पत्तिपक्ष एव प्रत्युज्जीवितः । न च काव्यशब्दानां केवलानां भावकत्वम् । अर्थापरिज्ञाने तदभावात् । न च केवलानामर्थानाम् । शब्दान्तरेणार्प्यमाणत्वे तदयोगात् । द्वयोस्तु भावकत्वमस्माभिरेवोक्तम् । 'यत्रार्थः शब्दो वा तमर्थं—व्यङ्क्तः' इत्यत्र । तस्माद्व्यञ्जकत्वाख्येन व्यापारेण गुणालंकारौचित्यादिकयेतिकर्तव्यतया काव्यं भावकं रसान्भावयति । इति त्र्यंशायामपि भावनायां कारणांशे ध्वननमेव निपतति । भोगोऽपि न काव्यशब्देन क्रियते अपि तु घनमोहान्ध्यसंघटनादिनिवृत्तिप्रवृत्तिद्वारेणास्वादापरनाम्नि । अलौकिके द्रुतविस्तरविकासात्मनि भोगे कर्तव्ये लोकोत्तरो ध्वननव्यापार एव मूर्धाभिषिक्तः । तच्चेदं भोगकृत्त्वं रसस्य ध्वननीयत्वे सिद्धे सिद्धे(ध्येत्) । रस्यमानोदितचमत्कारानतिरिक्तत्वाद्भोगस्येति । सत्त्वादीनां चाङ्गाङ्गिभाववैचित्र्यस्यानन्त्याद्द्रुत्यादित्वेनास्वादगणना न युक्ता । परब्रह्मास्वादसब्रह्मचारित्वं वास्त्वस्य रसास्वादस्य । व्युत्पादनं च शासनप्रतिपादनाभ्यां शास्त्रेतिहासकृताभ्यां विलक्षणम् । यथा रामस्तथाहमित्युपमानातिरिक्तां रसास्वादोपायस्वप्रतिभाविजृम्भणारूपां व्युत्पत्तिमन्ते करोतीति कमुपालभामहे । तस्मात्स्थितमेतत्—अभिव्यज्यन्ते रसाः प्रतीत्यैव च रस्यन्त इति । तत्राभिव्यक्तिप्रधान-

१. 'विलक्षणा तां च मुखे' ग. २. 'प्रमुख्ये' ख. ३. 'शाब्दप्रतीतेर्विलक्षणा तां च प्रमुखतां' ग. ४. 'अनुमानोपहतः पूर्वः' ग. ५. 'रसादि' ग. ६. 'चिद्वासना' ग. ७. 'चाविशेषो' क-ख. ८. 'काव्यस्य रस' क-ख. ९. 'ग्रहणात्मक' ग. १०. 'किमेतदपूर्वं' क-ख. ११. 'भावकं' क-ख. १२. 'एव' ग. १३. 'शब्दान्तानां' क-ख. १४. 'आर्थानामर्थान्तरेण' क-ख. १५. 'भावकत्वात्' ग. १६. 'व्यापारेणौचित्यादिकतयेति' ग. १७. 'भावुकं' क-ख. १८. 'करणांशेन' क-ख. १९. 'क्रियत इति घन' क-ख. २०. 'संघटनानिवृत्तिद्वारेण' क-ख. २१. 'द्रुत' क, 'द्रुति' ग. २२. 'भोगकृतं' क, 'भोगकत्वं' ग. २३. 'सिद्धे मखदन्तवदसिद्धम्' ग. २४. 'वा' ख. २५. 'अङ्गाङ्गितावैचित्र्य' ग. २६. 'न' क-ख-पुस्तकयोर्नास्ति. २७. चारित्वं चास्वादस्य रसा' ग. २८. 'शास्त्र' ग.



रसभावतदाभासतत्प्रशमलक्षणं मुख्यमर्थमनुवर्तमाना यत्र शब्दार्थालंकारा गुणाश्च परस्परं ध्वन्यपेक्षया च विभिन्नरूपा व्यवस्थितास्तत्र काव्ये ध्वनिरिति व्यपदेशः ।

**'प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गं तु रसादयः ।**
**काव्ये तस्मिन्नलंकारो रसादिरिति मे मतिः ॥ ५ ॥'**

यद्यपि रसवदलंकारस्यान्यैर्दर्शितो विषयस्तथापि यस्मिन्काव्ये प्रधानतयान्योऽर्थो वाक्यार्थीभूतस्तस्य चाङ्गभूता ये रसादयस्ते रसादेरलंकारस्य विषय इति मामकीनः पक्षः । तद्यथा चाटुषु प्रेयोलंकारस्य वाक्यार्थत्वेऽपि रसादयोऽङ्गभूता दृश्यन्ते ।

---

तया भवतु, अप्रधानतया वा । प्रधानत्वे ध्वनिः अन्यथा 'रसाद्यलंकाराः । तदाह—**रसभावेत्यादि । व्यवस्थिता इति** । पूर्वोक्तयुक्तिभिर्विभागेन व्यवस्थापितत्वादिति भावः । **अन्यत्रेति** । रसस्वरूपे वस्तुमात्रेऽलंकारतायोग्ये वा । **मे मतिरिति** । अन्यपक्षं दूष्यत्वेन हृदि निधायाभीष्टत्वात्स्वपक्षं पूर्वं दर्शयति वृत्तिकारः—**यद्यपीत्यादि** । स हि परदर्शितो विषयो भाविनीत्या नोपपन्न इति भावः । यस्मिन्काव्ये इति स्पष्टत्वेनासंगतं वाक्यमित्थं योजनीयम्—यस्मिन्काव्ये ते पूर्वोक्ता रसादयोऽङ्गभूता वाक्यार्थीभूतश्चान्यः । चशब्दस्तुशब्दस्यार्थे । तस्य काव्यस्य संबन्धिनो ये रसादयोऽङ्गभूतास्ते रसादेरलंकारस्य रसवदाद्यलंकारशब्दस्य विषयाः । स एवालंकारशब्दवाच्यो भवति योऽङ्गभूतः, न त्वन्य इति यावत् । अत्रोदाहरणमाह—**तद्यथेति** । तदित्यङ्गत्वम् । यथा वक्ष्यमाणोदाहरणे तथान्यत्रापीत्यर्थः भामहाभिप्रायेण तु चाटुषु प्रेयोलंकारस्य वाक्यार्थत्वेऽपि रसादयोऽङ्गभूता दृश्यन्त इतीदमेकं वाक्यम् । भामहेन हि गुरुदेवनृपतिपुत्रविषयप्रीतिवर्णनं प्रेयोलंकार इत्युक्तम् । तत्र प्रेयानलंकारो यत्र स प्रेयोलंकारोऽप्युक्तोऽलंकरणीय इहोक्तः । तत्र न त्वलंकारस्य वाक्यार्थत्वमुक्तम् । यदिवा वाक्यार्थत्वं प्रधानत्वम् ।

१. 'शब्दालंकारा अर्थालंकारा गुणाश्च' क-ख. २. 'अन्यैः' ग-पुस्तके नास्ति. ३. 'ये' ग-पुस्तके नास्ति. ४. 'विषयाः' ग. ५. 'मामकः' ग.

१. 'वा भवति' क-ख. २. 'मुख्यमर्थमिति' ग. ३. 'वृत्तिकारः' ग-पुस्तके नास्ति. ४. 'तथापीति' ग. ५. 'इति' क-ख-पुस्तकयोर्नास्ति. ६. 'संगतं' ग. ७. 'अधिभूता' ग. ८. 'ते—ऽङ्गभूतः' क-ख-पुस्तकयोर्नास्ति. ९. 'तु' क-ख-पुस्तकयोर्नास्ति. १०. 'नृपविषय' क-ख. ११. 'ऽप्युक्तो' ग-पुस्तके नास्ति. १२. 'तत्र' ग-पुस्तके नास्ति. १३. 'अलंकारवाक्यार्थत्वम्' ग.

स च रसादिरलंकारः शुद्धः संकीर्णो वा । तत्राद्यो यथा—

'किं हास्येन न मे प्रयास्यसि पुनः प्राप्तश्चिराद्दर्शनं
केयं निष्करुण प्रवासरुचिता केनासि दूरीकृतः ।
स्वप्नान्तेष्विति ते[1] वदन्प्रियतमव्यासक्तकण्ठग्रहो
बुद्ध्वा रोदिति रिक्तबाहुवलयस्तारं रिपुस्त्रीजनः ॥'

---

चमत्कारकारितेति यावत् । उद्भट[1]मतानुसारिणस्तु भङ्क्त्वा[2] व्याचक्षते । चाटुषु चाटुविषये वाक्यार्थत्वे चाटूनां[3] वाक्यार्थत्वे प्रेयोलंकारस्यापि विषय इति पूर्वेण संबन्धः । उद्भटमते हि भावालंकार एव प्रेय[4] इत्युक्तः । प्रेम्णा भावानामुपलक्षणात्[5] । न केवलं रसवदलंकारस्य विषयः यावत्प्रेयः[6]प्रभृतेरपीत्यपिशब्दार्थः । रसवच्छब्देन प्रेयःशब्देन च सर्व एव रसवदलंकार[7] उपलक्षितः । तदेवाह—रसादयोऽङ्गभूता दृश्यन्त[8] इति । **स चेति** । उक्तविषय इति शेषः । **शुद्ध इति** । रसान्तरेणाङ्गभूतेनालंकारान्तरेण[9] न मिश्रः । मिश्र[10]स्तु संकीर्णः । उदाहरति—**(किमिति ।)** स्वप्नस्या[11]नुभूतसदृशत्वेन भवनमिति हसन्नेव प्रियतमः स्वप्नेऽवलोकितः । न मे प्रयास्यसि पुनरिति । इदानीं त्वां विदितशठभावं बाहुपाशबन्धान्न मोक्षामि । अत एव रिक्तबाहुवलय इति । स्वीकृतस्य चोपालम्भो युक्त इत्याह—केयं निष्करुणेति । केनासीति । गोत्रस्खलना[12]दावपि न मया कदाचित्खेदितोऽसि । स्वप्नान्तेषु स्वप्नायितेषु सुप्त[13]प्रलपितेषु पुनःपुन[14]रुद्भूततया बहुष्विति वदन्युष्माकं संबन्धी रिपुस्त्रीजनः प्रियतमे विशेषेणासक्तः कण्ठग्रहो येन तादृश एव सन्बुद्ध्वा शून्यवलयाकारीकृतबाहुपाशः संस्तारं मुक्तकण्ठं रोदितीति । अत्र शोकस्थायिभावेन स्वप्नदर्शनोद्दीपितेन करुणरसेन चर्व्यमाणेन सुन्दरीभूतो नरपतिप्रभावो भातीति करुणः[15] शुद्ध एवालंकारः । नहि त्वया रिपवो हता इति यादृगनलंकृतोऽयं वाक्यार्थस्तादृगयम्, अपि[16] तु सुन्दरीभूतः । अत्रार्थसौन्दर्यं च करुणरसकृतमेवेति । चन्द्रादिना वस्तुना तथा वस्त्वन्तरं वदनाद्यलंक्रियते तदुपमितत्वेन चारुतयावभासात् ।

---

१. 'वो' क-ख.

---

१. 'औद्भट' ग. २. 'भक्त्या' ग. ३. 'चाटूनां वाक्यार्थत्वे' ग-पुस्तके नास्ति. ४. 'प्रेयस्वी' ग. ५. 'उपलक्षणत्वात्' क-ख. ६. 'प्रेयस्विप्रभृते' ग. ७. 'रसाद्यलंकारा उपलक्षिताः' ग. ८. 'दृश्यन्ते' ग-पुस्तके नास्ति. ९. 'अलंकारेण' क-ख. १०. मिश्रवस्तुसंकीर्णः' ग. ११. 'स्वप्नस्याङ्गभूत' क-ख. १२. 'स्खलितादावपि कदाचिन्मया' ग. १३. 'सुप्त' क-ख-पुस्तकयोर्नास्ति. १४. 'पुनर्भूत' क-ख. १५. 'करुणस्तु' ग. १६. 'अपि सुन्दरीभूतो वाक्यार्थः । सौन्दर्यं च करुणस्य कृतमेव' ग.



इत्यत्र करुणरसस्य शुद्धस्या[1]ङ्गभावात्स्पष्टमेव रसवदलंकारत्वम् । एवमेवंविधे विषये रसान्तराणां स्पष्ट एवाङ्गभावः । संकीर्णो[2] रसादिरङ्गभूतो यथा—

'क्षिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्य[3]ाददानो[4]ऽंशुकान्तं
गृह्णन्केशेष्वपास्तश्चरणनिपतितो नेक्षितः संभ्रमेण ।
आलिङ्गन्योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः
कामीवार्द्रापराधः स दहतु दुरितं शांभवो वः शराग्निः ॥'

इत्यत्र त्रिपुररिपुप्रभावातिशयस्य वाक्यार्थत्वे ईर्ष्याविप्रलम्भस्य श्लेषसहितस्याङ्गभाव इत्येवंविध एव रसवदा[5]द्यलंकारस्य न्याय्यो विषयः ।

---

तथा[1] रसेनापि वस्तु[2] वा रसान्तरं वोप[3]स्कृतं सुन्दरं भाति । इति रसस्यापि वस्तुन इवालंकारत्वे को विरोधः । ननु रसेन किं[4] कुर्वता प्रकृतो[5]ऽर्थोऽलंक्रियते । तर्हि उपमयापि किं कुर्वत्यालंक्रियेत[6] । ननु तयोपमीयते प्रस्तुतोऽर्थः[7] । रसेनापि तर्हि सरसीक्रियते सोऽर्थ इति स्वसंवेद्यमेतत् । तेन यत्केचिदचूचुदन् 'अत्र[8] रसेन विभावादीनां मध्ये किमलं क्रियते' इति[9] तदन[10]भ्युपगमपराहतम् । प्रस्तुतार्थस्या[11]लंकार्यत्वेनाभिधानात् । अस्यार्थस्य भूयसा लक्ष्ये[12] सद्भाव इति दर्शयति—**एवमिति** । यत्र[13] राजादेः प्रभाव[14]ख्यापनं तादृश इत्यर्थः । संकीर्ण[15]रसाद्यलंकारमुदाहरति—**क्षिप्त इति** । कामिपक्षेऽनादृतः, इतरत्र धुतः[16] । अवधूत इति न प्रतीप्सितः प्रत्यालिङ्गनेन, इतरत्र सर्वाङ्गधूननेन विशरारू[17]कृतः । साश्रुत्वमेकत्रेर्ष्यया अन्यत्र निष्प्रत्याशतया । कामीवेत्यनेनोपमानेन श्लेषानुगृहीतेनेर्ष्याविप्रलम्भो य[18] आकृष्टस्तस्य श्लेषोपमासहितस्याङ्गत्वम्, न केवलस्य । यद्यत्र करुणो रसो वास्तवोऽप्यस्ति तथापि स तच्चारुत्वप्रतीतौ न व्याप्रियत

---

१. 'शुद्धस्य' ग-पुस्तके नास्ति. २. 'संकीर्णे' क-ख. ३. 'च' ग. ४. 'आदधानो' क-ख. ५. 'रसवदलंकारस्य' ग.

---

१. 'अतथा' ग. २. 'वस्तुना रसान्तरं' ख. ३. 'वा' क-ख-पुस्तकयोर्नास्ति. ४. 'किं' क-ख-पुस्तकयोर्नास्ति. ५. 'प्रस्तुतो' ग. ६. 'क्रियेत' क-ख. ७. 'प्रस्तुतोऽर्थः' क-ख-पुस्तकयोर्नास्ति. ८. 'अत्र' क-ख-पुस्तकयोर्नास्ति. ९. 'इति' ग-पुस्तके नास्ति. १०. 'तदभ्युपगम' क-ख. ११. 'अलंकारत्वेन' क-ख. १२. 'भूयसार्थसद्भावः' क-ख. १३. 'अत्र' ग. १४. 'प्रभाव' क-ख-पुस्तकयोर्नास्ति. १५. 'संकी—रति' ग-पुस्तके नास्ति. १६. 'द्रुतः' ख, 'भूतः' ग. १७. 'विशरारुकः' ग. १८. 'य आकृ—केवलस्य' ग-पुस्तके नास्ति.

अत एव चेर्ष्याविप्रलम्भकरुणयोरङ्गत्वेन व्यवस्थानात्समावेशो न दोषः । यत्र हि रसस्य वाक्यार्थीभावस्तत्र कथमलंकारत्वम् । अलंकारो हि चारुत्वहेतुः प्रसिद्धः । न त्वसावात्मैवात्मनश्चारुत्वहेतुः ।

तथा चायमत्र संक्षेपः—

'रसभावादितात्पर्यमाश्रित्य विनिवेशनम् ।
अलंकृतीनां सर्वासामलंकारत्वसाधनम् ॥ ६ ॥'

तस्माद्यत्र रसादयो वाक्यार्थीभूताः [सर्वे ते न रसादेरलंकारस्य वा विषयाः] स ध्वनेः प्रभेदः । तस्योपमादयोऽलंकाराः । यत्र तु प्राधान्येनार्थान्तरस्य वाक्यार्थीभावे रसादिभिश्चारुत्वनिष्पत्तिः क्रियते स रसादेरलंकारताया विषयः ।

---

इत्यनेनाभिप्रायेण श्लेषसहितस्येत्येतावदेवावोचत् । न तु करुणसहितस्येत्यपि । एतमर्थमपूर्वतयोत्प्रेक्षितं द्रढीकर्तुमाह—**अत एवेति** । यतोऽत्र विप्रलम्भस्यालंकारत्वं न तु वाक्यार्थता अतो हेतोरित्यर्थः । **न दोष इति** । यदि ह्यन्यतरस्य रसादेः प्राधान्यमभविष्यन्न द्वितीयो रसः समाविशेत् । रतिस्थायिभावत्वेन तु सापेक्षभावो विप्रलम्भः । स च शोकस्थायिभावत्वेन निरपेक्षभावस्य करुणस्य विरुद्ध एव । एवमलंकारशब्दप्रसङ्गेन समावेशं प्रसाध्य एवंविध एवेति यदुक्तं तत्रैवकारस्याभिप्रायं व्याचष्टे—**यत्र हीति** । सर्वासामुपमादीनाम् । अयं भावः—उपमादीनामलंकारत्वे यादृशी वार्ता तादृश्येव रसादीनाम् । तदवश्यमनेनालंकार्येण भवितव्यम् । तच्च यद्यपि वस्तुमात्रमपि भवति तथापि तस्य पुनरपि विभावादिरूपतात्पर्यावसानाद्रसादितात्पर्यमेवेति सर्वत्र रसध्वनेरेवात्मभावः । तदुक्तं रसभावादितात्पर्यमिति । तस्येति प्रधानस्यात्मभूतस्य । एतदुक्तं भवति—उपमया यद्यपि वाच्योऽर्थोऽलंक्रियते तथापि तस्य तदेवालंकरणं यद्व्य-

---

१. 'समावेशे' क-ख. २. 'चारुत्वे सिद्धिहेतुः' क-ख. ३. 'न त्वात्मैवात्मनः । तथा' क-ख. ४. 'तथायमत्र' ग. ५. 'विनिवेशितम्' क-ख. ६. 'सर्वे—विषयाः' क-ख-पुस्तकयोर्नास्ति. ७. 'तु' क-ख-पुस्तकयोर्नास्ति. ८. 'अर्थान्तरवाक्यार्थी' क-ख. ९. 'अलंकारताविषयः' क-ख.

---

१. 'एवंविध एवेति' ग. २. 'ततो' क-ख. ३. 'रसादेः' ग-पुस्तके नास्ति. ४. 'तु' क-ख-पुस्तकयोर्नास्ति. ५. 'स च' क-ख-पुस्तकयोर्नास्ति. ६. 'सर्वासामित्युपमा' ग. ७. 'वाक्' ग. ८. 'तत्र' ग. ९. 'तस्य' क-ख-पुस्तकयोर्नास्ति. १०. 'तदेवालंकरणीयं व्यङ्ग्यार्था' क-ख.



एवं ध्वनेरुपमादीनां रसवदलंकारस्य च विभक्तविषयता भवति । यदि तु चेतनानां वाक्यार्थीभावो रसाद्यलंकारस्य विषय इत्युच्यते तर्हु-

---

ङ्ग्यार्थाभिव्यञ्जनसामर्थ्याधानमिति । वस्तुतो ध्वन्यात्मैवालंकार्यः । कटककेयूरादिभिरपि हि शरीरसमवायिभिश्चेतन आत्मैव तत्तच्चित्तवृत्तिविशेषौचित्यसूचनात्मतयालंक्रियते । तथाह्यचेतनं शवशरीरं कुण्डलाद्युपेतमपि न भाति । अलंकार्यस्याभावात् । यतिशरीरं कटकादियुक्तं हास्यावहं भवति । अलंकार्यस्यानौचित्यात् । न च देहस्य किंचिदनौचित्यमिति वस्तुत आत्मैवालंकार्यः । अहमलंकृत इत्यभिमानात् । रसादेरलंकारताया इति व्यधिकरणषष्ठ्यौ । रसादेर्यालंकारता तस्याः स एव विषयः । एतदनुसारेणैव पूर्वत्रापि वाक्ये योज्यम् । रसादिकर्तृकस्यालंकरणक्रियात्मनो विषय इति । **एवमिति** । अस्मदुक्तेन विषयविभागेनेत्यर्थः । यत्र रसस्यालंकार्यता रसान्तरं चाङ्गभूतं नास्ति तत्र शुद्धा एवोपमादयः । तेन स्पष्ट्या नोपमादीनां विषयापहार इति भावः । **रसवदलंकारस्य चेति** । अनेन भावाद्यलंकारा अपि प्रेयस्व्यूर्जस्विसमाहितादयो गृह्यन्ते । तत्र भावालंकारस्य शुद्धस्योदाहरणं यथा—'तव शतपत्रपत्रमृदुताम्रतलश्चरणश्चलत्कलहंसनूपुरकलध्वनिना मुखरः । महिषमहासुरस्य शिरसि प्रसभं निहितः कनकमहामहीध्रगुरुतामयमम्ब गतः ॥' इत्यत्र देवतास्तोत्रे वाक्यार्थीभूते वितर्कविस्मयादिभावस्य चारुत्वहेतुतेति तस्याङ्गत्वाद्भावालंकारस्य विषयः । रसाभासस्यालंकारता यथा ममैव स्तोत्रे—'समस्तगुणसंपदः सममलंक्रियाणां गुणैर्भवन्ति यदि भूषणं तव तथापि नो शोभसे । शिवं हृदयवल्लभं यदि यथा तथा रञ्जयेस्तदेव ननु वाणि ते जगति सर्वलोकोत्तरम् ॥' अत्र हि परमेशस्तुतिमात्रं वाचः परमोपादेयमिति वाक्यार्थे शृङ्गाराभासश्चारुत्वहेतुः श्लेषसहितः । नह्ययं पूर्णः शृङ्गारो नायिकाया निर्गुणत्वे निरलंकारत्वे च भवति । 'उत्तमयुवप्रकृतिरुज्ज्वलवेषात्मकः' इति चाभिधानात् । भावाभासाङ्गता यथा—'स पातु वो यस्य हतावशेषास्तत्तुल्यवर्णाञ्जनरञ्जितेषु । लावण्ययुक्तेष्वपि वित्रसन्ति दैत्याः स्वकान्तानयनोत्पलेषु ॥' अत्र रौद्रप्रभृतीनामनुचितस्त्रासो भगवत्प्रभावकारणकृत इति भावाभासः । एवं तत्प्रशमस्याङ्गत्वमुदाहार्यम् । मे मतिरित्यनेन यत्परमतं सूचितं तद्दूषणमुपन्यस्यति—**यदीत्यादिना** । परस्य चायमाशयः—अचेतनानां चित्तवृत्तिरूपरसाद्यसंभवात्तद्वर्णनेन रसवदलंकारस्यानाशङ्क्यत्वात्तद्विभक्त एवोपमादीनां वि-

---

१. 'विविक्त' ग. २. 'इति' ग-पुस्तके नास्ति. ३. 'तदुपमा' क-ख.

---

१. 'दानमिति' क-ख. २. 'सूचनायात्मतया' क-ख. ३. 'समाहितलक्षणादयो' ग. ४. 'तत्र' ग-पुस्तके नास्ति. ५. 'रव' क-ख. ६. 'कस्य' ग. ७. 'न हृदयं' क-ख. ८. 'पूर्वः' ग. ९. 'तद्वर्णने रसवदाद्यलंकारस्य' ग.

पमादीनां प्रविरलविषयता निर्विषयता वाभिहिता स्यात्। तस्मादचेतनवस्तुवृ[1]त्ते वाक्यार्थीभूते पुनश्चेतनवस्तुवृ[2]त्तान्तयोजनया यथाकथंचिद्भवितव्यम्। अथ सत्यामपि तस्यां यत्राचेतनानां वाक्यार्थीभावो नासौ रसवदलंकारस्य विषय इत्युच्यते। ननु महतः काव्यप्रबन्धस्य रसनिधानभूतस्य नीरसत्वमभिहितं स्यात्। यथा—

'तरङ्गभ्रूभङ्गा क्षुभितविहगश्रेणि[3]रशना
विकर्षन्ती फेनं वसनमिव संरम्भशिथिलम्।
यथाविद्धं याति स्खलितमभिसंधाय बहुशो
[4]नदीरूपेणेयं ध्रुवमसहना सा परिणता॥'

यथा वा—

'तन्वी मेघजलार्द्रपल्लवतया धौताधरेवाश्रुभिः
शून्येवाभरणैः स्वकालविरहाद्विश्रान्तपुष्पोद्गमा।

---

षय इति। एतद्दूषयति—**त[1]र्हीति**। तस्माद्वचनाद्धेतोरित्यर्थः। [2]नन्वचेतनवर्णनं विषय इत्युक्तमित्याशङ्क्य हेतुमाह—**यस्मादिति**। यथाकथंचिदिति विभावादिरूपतया। **तस्यामिति**। चेतनवृत्तान्तयोजनायाम्। **नी[3]रसत्वमिति**। यत्र हि रसस्तत्रावश्यं रसवदलंकार इति [4]परमतम्। ततो न रसवदलंकारश्चेन्नूनं तत्र रसो नास्तीति [5]परमताभिप्रायान्नीरसत्वमुक्तम्। न त्वस्माकं रसवदलंकाराभावे नीरसत्वम्। अपि तु ध्वन्यात्मभूतरसाभावे। तादृ[6]ग्रसोऽत्रास्त्येव। [7]परपक्षदूषणायोदाहरति—**यथा—तरङ्गेति**। तरङ्गा एव भ्रूभङ्गा यस्याः। विकर्षन्ती विलम्बमानं बलादाक्षिपन्ती। वसनमंशुकम्। प्रियतमावलम्बननिषेधायेति भावः। बहुशो यत्स्खलितं ये[8]ऽपराधास्ताननभिसंधाय हृदये[9]नैकीकृत्यासहमाना मानिनीत्यर्थः। अथ च मद्वियोगपश्चात्तापासहिष्णुस्तापशान्तये नदीभावं गतेति। **तन्वीति**। वियोगकृशाप्यनुतप्ता चाभरणानि त्यजति। स्वकालो वसन्तग्रीष्मप्रायः। [10]उपायचिन्तनार्थं मौनं किमिति पादपतितमपि दयितमवधूतवत्यहमिति च

---

१. 'वृत्तान्ते' क-ख. २. 'वृत्तान्त' क-ख-पुस्तकयोर्नास्ति. ३. 'नयना' क-ख. ४. 'नदीभावेन' क-ख.

---

१. 'तदिति' क-ख. २. 'ननु चेतन' क-ख. ३. 'नीरसत्वमिति' क-ख-पुस्तकयोर्नास्ति. ४. 'परस्य' क-ख. ५. 'परमताभिप्रायं' क-ख. ६. 'रसो नास्त्येव' क-ख. ७. 'पर—तरङ्गेति' ग-पुस्तके नास्ति. ८. 'विरोधाः' ग. ९. 'तत्तदभि' क-ख. १०. 'उपायचिन्ता तन्मौनं चिन्तामौनं' ग.



चिन्तामौनमिवाश्रिता मधुकृतां शब्दैर्विना लक्ष्यते[1]
चण्डी मामवधूय पादपतितं जातानुतापेव सा॥'

[2]यथा वा—

'तेषां गोपवधूविलाससुहृदां राधारहःसाक्षिणां
क्षेमं भद्र कलिन्दशैलतनयातीरे लतावेश्मनाम्।
विच्छिन्ने स्मरतल्पकल्पनमृदुच्छेदोपयोगेऽधुना
ते जाने जरठीभवन्ति विगलन्नीलत्विषः पल्लवाः॥'

इत्येवमादौ विषयेऽचेतनानां वाक्यार्थीभावेऽपि चे[3]तनवस्तुवृत्तान्तयोजनास्त्येव। [4]अथ यत्र चेतनवस्तुवृत्तान्तयोजनास्ति तत्र रसादिरलंकारः।

---

चिन्तया मौनम्। चण्डी कोपना। एतौ श्लोकौ नदीलतावर्णनपरौ तात्पर्येण पुरूरवस उन्मादाक्रान्तस्योक्तिरूपौ। **यथा वा—तेषामिति**। हे भद्र, तेषामिति ये ममैव हृदये स्थितास्तेषाम्। गोपवधूनां गोपीनां ये विलाससुहृदो नर्मसचिवास्तेषाम्। प्रच्छन्नानुरागिणीनां हि नान्यो नर्मसुहृद्भवति। [1]राधायाश्च सातिशयं प्रेमस्थानमित्याह—राधासंभोगानां ये साक्षाद्द्रष्टारः कलिन्दशैलतनया यमुना तस्यास्तीरे लतागृहाणां क्षेमं कुशलमिति काक्वा प्रश्नः। एवं [3]तं पृष्ट्वा गोपदर्शनप्रबुद्धसंस्कार आलम्बनोद्दीपनविभावस्मरणात्प्रबुद्धरतिभावमात्मगतमौत्सुक्यगर्भमाह द्वारकागतो भगवान्कृष्णः—स्मरतल्पस्य मदनशय्यायाः कल्पनार्थं मृदु सुकुमारं कृत्वा यश्छेदस्त्रोटनं स एवोपयोगः साफल्यम्। अथवा स्मरतल्पे यत्कल्पनं कृप्तिः स एव मृदुः सुकुमार उत्कृष्टश्छेदोपयोगस्त्रोटनफलं तस्मिन्विच्छिन्ने। मय्यनासी[4]ने का स्मरतल्पकल्पनेति भावः। अत एव परस्परानुरागनिश्चयगर्भमेवाह—ते जाने इति। वाक्यार्थ[5]स्यात्र कर्मत्वम्। अधुना जरठीभवन्तीति। मयि तु संनिहितेऽनवरतकालिकोपयोगान्नेमे जीर्णताखलीकारं कदाचिदवाप्नुवन्तीति भावः। विगलन्ती नीला त्विड्येषामित्यनेन कतिपयकालप्रोषितस्याप्यौत्सुक्यनिर्भरत्वं ध्वनितम्। एवमात्मगतेयमुक्तिर्यदि वा गोपं प्रत्येव संप्रधारणोक्तिः। बहुभिरुदाहरणैर्महतो भूयसः प्रबन्धस्येति यदुक्तं तत्सूचितम्। **अथेत्यादि**। नीरसत्वमत्र मा भूदित्यभिप्रा-

---

१. 'दृश्यते' ग. २. 'यथा वा' ग-पुस्तके नास्ति. ३. 'सचेतन' क-ख. ४. 'अत्र यत्र' ग.

---

१. 'राधा च सातिशयप्रेम' क-ख. २. 'कथं' ग. ३. 'तं' ग-पुस्तके नास्ति. ४. 'कथितोपयोगान्ते मञ्जर्यो जीर्णता' क-ख. ५. 'निरसत्वमात्रं' क-ख.

तदेवं सत्युपमादयो निर्विषयाः प्रविरलविषया वा स्युः । यस्मान्नास्त्येवासावचेतनवस्तुवृत्तान्तो यत्र चेतनवस्तुवृत्तान्तयोजना नास्त्यन्ततो विभाव[1]त्वेन । [2]तस्मादङ्गत्वेन च रसादीनामलंकारता । यः पुनरङ्गी रसो भावो वा सर्वाकारमलंकार्यः स ध्वनेरात्मेति ।

किंच ।

**'तमर्थमवलम्बन्ते ये[3]ऽङ्गिनं ते गुणाः स्मृताः ।**
**अङ्गाश्रितास्त्वलंकारा मन्तव्याः कटकादिवत् ॥ ७ ॥'**

ये तमर्थं रसादिलक्षणमङ्गिनं सन्तमवलम्बन्ते ते गुणाः शौर्यादिवत् । वाच्यवाचकलक्षणान्यङ्गानि ये [4]पुनराश्रितास्तेऽलंकारा मन्तव्याः । [5]कटकादिवदिति ।

---

येणेति शेषः । ननु यत्र [1]चेतनवस्तुवृत्तस्य सर्वथा नानुप्रवेशः स उपमादेर्विषयो भविष्यतीत्याशङ्क्याह—**यस्मादित्यादि** । स्तम्भपुलकाद्यचेतनमपि वर्ण्यमानम[2]नुभावत्वाच्चेतनमाक्षिपत्येव । तावत्किमत्रोच्यते । अतिजडोऽपि चन्द्रोद्यानप्र[3]भृतिस्त्वविश्रान्तोऽपि वर्ण्यमानोऽवश्यं चित्तवृत्ति[4]विभावतां त्यक्त्वा काव्येऽनाख्येय एव स्यात् । शास्त्रेतिहासयोर[5]पि वा । एवं परमतं दूषयित्वा स्वमतमेव प्रत्याम्नायोपसंहरति—**तस्मादिति** । यतः [6]परोक्तो विषयविभागो न युक्त इत्यर्थः । **[7]यः पुनरिति । भावो वेति** । [8]भावग्रहणात्तदाभासतत्प्रशमादयः । सर्वाकारमिति क्रियाविशेषणम् । तेन सर्वप्रकारमित्यर्थः । अलंकार्य इत्यत्रैव, नालंकार इति भावः । अलंकार्यव्यतिरिक्तश्चालंकारोऽभ्युपगन्तव्यः । लोके तथासिद्धत्वात् । यथा गुणिव्यतिरिक्तो गुणः । गुणालंकारव्यवहारश्च गुणिन्यलंकार्ये च सति । स चास्मत्पक्ष एवोपपन्न इत्य[9]भिप्रायेणाह—**किं चेत्यादि** । न केवलमेतावद्युक्तिजातं रसस्याङ्गित्वे यावदन्यदपीति समुच्चयार्थः । **[10]तमर्थमिति** । [11]कारिकाप्यभिप्रायद्वयेनैव योज्या । न केवलं प्रथमाभिप्राये प्रथम[12]कारिकार्थदृष्टान्ताभिप्रायेण व्याख्येयम् । एवं वृत्तिग्रन्थोऽपि योज्यः । [13]ननु शब्दार्थयोर्माधुर्यादयो गुणास्तत्कथमुक्तं रसादिकमङ्गिनं

---

१. 'विभातत्वेन' क-ख. २. 'तस्मादङ्गत्वेन च' ग-पुस्तके नास्ति. ३. 'योऽङ्गिनं ते गुणाश्रिताः' ग. ४. 'पुनस्तदाश्रिताः' ग. ५. 'कुण्डलादिवदिति' ग.

---

१. 'चेतनवृत्तस्य' ग. २. 'अनुभवत्वाच्चेतनमाक्षिपतीत्येव तावदत्र किमुच्यते' क-ख. ३. 'प्रभृतिस्वविश्रान्तो' क-ख. ४. 'विभावनां' क-ख. ५. 'इति वा' क-ख. ६. 'परोक्ते' क-ख. ७. 'यः पुनरिति' ग-पुस्तके नास्ति. ८. 'वाग्रहणात्' क-ख. ९. 'अभिप्रायद्वयेनाह' ग. १०. 'तमर्थमिति' ग-पुस्तके नास्ति. ११. 'कारिकेयमभिप्रायद्वारेणैव' क-ख. १२. 'कारिकापूर्वदृष्टा' क-ख. १३. 'ननु च' क-ख.



[1]तथा च—

**'शृङ्गार [2]एव मधुरः परः प्रह्लादनो रसः ।**
**[3]तन्मयं काव्यमाश्रित्य माधुर्यं प्रतितिष्ठति ॥ ८ ॥'**

शृङ्गार एव रसान्तरापेक्षया मधुरः प्रह्लादहेतुत्वात्प्रकाशनपरः । [4]शब्दार्थयोः काव्यस्य स माधुर्यलक्षणो गुणः । [5]श्रव्यत्वं पुनरोजसोऽपि साधारणमिति ।

**'शृङ्गारे विप्रलम्भाख्ये करुणे च प्रकर्षवत् ।**
**माधुर्यमार्द्रतां याति यतस्तत्राधिकं [6]मनः ॥ ९ ॥'**

---

गुणा आश्रिता इत्याशङ्क्याह—**[1]तथा चेत्यादि** । तेन वक्ष्यमाणेन बुद्धिस्थेन परिहारप्रकारेणोप[2]पद्यते चैतदित्यर्थः । **[3]शृङ्गार एवेति** । मधुर इत्यत्र हेतुमाह—परः प्रह्लादन इति । रतौ हि समस्तदेवतिर्यङ्नरादि[4]जातिष्वविच्छिन्नैव वासनास्त इति न [5]कश्चित्तत्र तादृग्यो न हृदयसंवादमयः । रतेरपि हि तच्चमत्कारोऽस्त्येव । अत एव मधुर इत्युक्तः । मधुरो हि शर्करादिरसो विवेकिनो वा स्वस्थस्यातुरस्य वा झटिति रसनानिपतितस्तावदभिलषणीय [6]एव भवति । तन्मयमिति । स शृङ्गार आत्मत्वेन प्रकृतो यत्र व्यङ्ग्यतया । काव्यमिति । शब्दार्थावित्यर्थः । प्रतितिष्ठतीति । प्रतिष्ठां गच्छतीति यावत् । एतदुक्तं भवति—वस्तुतो माधुर्यं नाम शृङ्गारादे रसस्यैव गुणः । तन्मधुराभिव्यञ्जकयोः शब्दार्थयोरु[7]पचरितम् । मधुरशृङ्गाररसाभिव्यक्तिसमर्थता शब्दार्थयोर्माधुर्यमिति हि [8]लक्षणम् । तस्माद्युक्तमुक्तं तमर्थमित्यादि । [9]कारिकार्थं वृत्त्याह—**शृङ्गार इति** । ननु 'श्रव्यं नातिसमस्त शब्दार्थं मधुरमिष्यते' इति माधुर्यस्य लक्षणं नेत्याह—**श्रव्यत्वमिति** । [10]सर्वं लक्षणमुपलक्षितम् । ओजसोऽपीति । 'यो यः शस्त्रं' इत्यत्र हि श्रव्यत्वमस[11]मस्तत्वं चास्त्येवेति भावः । संभोगशृङ्गारान्मधुरतरो विप्रलम्भः ततोऽपि मधुरतमः करुण इति तदभिव्यञ्जनकौशलं शब्दार्थयोर्मधुरतरमधुरतमत्वं चेत्यभिप्रायेणाह—**शृङ्गार इत्यादि** । करुणे चेति चशब्दः क्रममाह । प्रकर्षवदिति । उत्तरोत्तरं तरतमयोगेनेति[12]

---

१. 'यथा च' क. २. 'एको' ग. ३. 'तद्रूपं' ग. ४. 'शब्दार्थतया' ग. ५. 'श्राव्यत्वं' ग. ६. 'मतः' ग.

---

१. 'यथा च' क. २. 'उपपद्यत एव चेत्यर्थः' ग. ३. 'शृङ्गार एवेति' क-ख-पुस्तकयोर्नास्ति. ४. 'जातिषु च्छन्नैव' क-ख. ५. 'किंचित्तत्र' क-ख. ६. 'एव' क-ख-पुस्तकयोर्नास्ति. ७. 'उपचितं माधुर्यम्' क-ख. ८. 'तल्लक्षणम्' क-ख. ९. 'कारिका—इति' ग-पुस्तके नास्ति. १०. 'सकलं' ग. ११. 'समस्तत्वं चास्तिवेति' क-ख. १२. 'इत्यर्थः' क-ख.

विप्रलम्भशृङ्गारकरुणयोस्तु माधुर्यमेव प्रकर्षवत् । सहृदयहृदयावर्जनातिशयनिमित्तत्वादि[1]ति ।

'रौद्रादयो रसा दीप्त्या लक्ष्यन्ते काव्यवर्तिनः ।
तद्व्यक्तिहेतू शब्दार्थावाश्रित्यौजो व्यवस्थितम् ॥ १० ॥'

रौद्रादयो हि रसाः परां दीप्तिमुज्ज्वलतां जनयन्तीति [3]लक्षणया त एव[2] दीप्तिरित्युच्यते । तत्प्रकाशनपरः शब्दो दीर्घसमासरचनालंकृतं वाक्यम् । यथा—

'चञ्चद्भुजभ्रमितचण्डगदाभिघात-
संचूर्णितोरुयुगलस्य सुयोधनस्य ।
स्त्यानावबद्धघनशोणितशोणपाणि-
रुत्तंसयिष्यति कचांस्तव देवि भीमः ॥'

---

भावः । आर्द्रतामिति । सहृदयस्य चेतः स्वाभाविकमनाविष्टत्वात्मकं [1]काठिन्यक्रोधादिदीप्तरूपं विस्मयहासादिरागित्वं च त्यजतीत्यर्थः । **अधिकमिति** । क्रमेणेत्याशयः । तेन करुणेऽपि सर्वथैव चित्तं द्रवतीत्युक्तं भवति । ननु करुणेऽपि यदि मधुरिमास्ति तर्हि पूर्वकारिकायां शृङ्गार एवेत्येवकारः किमर्थः । उच्यते—नानेन रसान्तरं व्यवच्छिद्यते । अपि त्वात्मभूतस्य रसस्यैव परमार्थतो गुणा माधुर्यादयः, उपचारेण तु शब्दार्थयोरित्येवकारेण द्योत्यते । वृत्त्यार्थमाह—**विप्रलम्भेति** । **रौद्रेत्यादि** । आदिशब्दः प्रकारे । तेन वीराद्भुतयोरपि ग्रहणम् । दीप्तिः प्रतिपत्तुर्हृदये विभासविस्तारप्रज्वलत्स्वभावा । सा च मुख्यतया ओ[3]जःशब्दवाच्या । तदास्वादमया रौद्राद्यास्तया दीप्त्यास्वादविशे[4]षात्मिकया कार्यरूपया लक्ष्यन्ते रसान्तरात्पृथक्तया । तेन कारणे [5]कार्योपचाराद्रौद्रादिरेवौ[6]जःशब्दवाच्यः । ततो लक्षितलक्षणया तत्प्रकाशनपरः [7]शब्दो दीर्घसमासरचनवाक्यरूपोऽपि दीप्तिरित्युच्यते । उदाहरति—**यथा चञ्चदिति** । चञ्चद्भ्यां वेगादावर्तमानाभ्यां भुजाभ्यां भ्रमिता ये[8]यं चण्डा दारुणा गदा तया योऽभितः सर्वत ऊर्वो-

१. 'इति' ग-पुस्तके नास्ति. २. 'दीप्ता' क-ख. ३. 'लक्षणया त एव' क-ख-पुस्तकयोर्नास्ति.

१. 'काठिन्यमत्क्रोधादि' क-ख. २. 'विकास' क-ख. ३. 'तेजः' क-ख. ४. 'विशेषात्मतया' क. ५. 'कारणेन कार्येऽपि च रौद्रा' क-ख. ६. 'तेजः' क-ख. ७. 'शब्दो' क-ख-पुस्तकयोर्नास्ति. ८. 'येयं' क-ख-पुस्तकयोर्नास्ति. ९. 'योऽभिभूतः सर्वत' क-ख, 'योऽभिघातः संतत' ग.



[1]तत्प्रकाशनपरश्चार्थो नोऽपेक्षितदीर्घसमासरचनः प्रसन्नवाचकाभिधेयः । यथा—

'यो यः शस्त्रं बिभर्ति स्वभुजगुरुमदः पाण्डवीनां चमूनां
यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा ।
यो यस्तत्कर्मसाक्षी [2]चरति मयि रणे यश्च यश्च प्रतीपः
क्रोधान्धस्तस्य तस्य स्वयमपि जगतामन्तकस्यान्तकोऽहम् ॥'

इत्यादौ [3]द्वयोरोजस्त्वम् ।

---

घातस्तेन सम्यक् चूर्णितं पुनरनुत्थानोपहतं कृतमूरुयुगलं युगपदेवोरुद्वयं यस्य तं सुयोधनमनादृत्यैव स्त्यानेनाश्यानतया न तु कालान्तरशुष्कतयावबद्धं हस्ताभ्यामविग[1]लद्रूपमत्यन्तमाभ्यन्तरतया घनं न तु रसमात्रस्वभावं यच्छोणितं रुधिरं तेन शोणौ लोहितौ पाणी यस्य सः । अत एव भीमः कातरत्रासदायी । तवेति । यस्यास्तत्तदपमानजातं कृतं देव्यनुचितमपि तस्यास्तव कचानुत्तंसयिष्यत्युत्तंसवतः करिष्यतीति वेणीत्वमपहरन्करवि[2]धृतशोणितशकलैर्लोहितकुसुमापीडेनेव योजयिष्यतीत्युत्प्रेक्षा । दे[3]वीत्यनेन कुलकलत्रखलीकारस्मरणकारिणा क्रोधस्यैवोद्दीपनविभावत्वं कृतमिति नात्र शृङ्गारशङ्का कर्तव्या । सुयोधनस्य चानादरणं द्वितीयगदाघातदाना[4]थनुद्यमात् । स च संचूर्णितोरुत्वादेव । स्त्यानग्रहणेन द्रौपदीमन्युप्रक्षालने त्वरा सूचिता । समासेन च संततवेगवहनस्वभावात् तावत्येव मध्ये विश्रान्तिमलभमाना चूर्णितोरुद्वयसुयोधनानादरणपर्यन्ता प्रतीतिरे[5]कत्वेनैव भवतीत्यौ[6]द्धत्यस्य परं परिपोषका । अन्ये तु सुयोधनस्य संबन्धि यत्स्त्यानावबद्धं घनं शोणितं तेन शोणपाणिरिति व्याचक्षते । [7]तत्प्रकाशनपरश्चार्थः प्रसन्नैर्गमकैर्वाचकैरभिधीयमानः [8]समासानपेक्ष्यपि दीप्तिरुच्यते । उदाहरति—**य इति** । स्वभुजयोर्गुरुर्मदो यस्य चमूनां मध्येऽर्जुनादिरित्यर्थः । पाञ्चालराजपुत्रेण धृष्टद्युम्नेन द्रोणस्य व्यापादनात्[9]तत्कुलं प्रत्यधिकः क्रोधावेशोऽश्वत्थाम्नः । तत्कर्मसाक्षीति कर्णप्रभृतिः । रणे सङ्ग्रामे कर्तव्ये यो मयि मद्विषये प्रतीपं च[10]रति समरविघ्नमाचरति । यद्वा मयि चरति [11]सति सङ्ग्रामे यः प्रतीपं प्रतिकूलं कृत्वास्ते स एवंविधो यदि सकलजगदन्तको भवति तस्याप्यहमन्तकः किमुतान्यम[12]नुष्यस्य देवस्य वा । अत्र पृथग्भूतैरेव क्रमाद्विमृष्यमाणै[13]रर्थैः [14]पदात्पदं क्रोधः [15]परां

१. 'तत्प्रकाशितश्चार्थो' क-ख. २. 'चलति' क-ख. ३. 'तयोः' ग.

१. 'चलद्रूप' क-ख. २. 'विच्युतशोणितशकलेन' ग. ३. 'देवीत्यत्र' क-ख. ४. 'अनुमानात्' ख, 'अनुद्यमः' ग. ५. 'एका घनैव' क. ६. 'औद्धत्यपरिपोषकाः' क-ख. ७. 'तत्—र्थः' क-ख-पुस्तकयोर्नास्ति. ८. 'समासमनपेक्ष्यापि' ग. ९. 'तं प्रति' क-ख. १०. 'चलति' क-ख. ११. 'सति' क-ख-पुस्तकयोर्नास्ति. १२. 'मानुषस्य' ग. १३. 'अर्थैः' क-ख-पुस्तकयोर्नास्ति. १४. 'पादात्पादे क्रोधात्परां' क-ख. १५. 'परां दीप्तिं गतः' ग.

'समर्पकत्वं काव्यस्य यत्तु सर्वरसान्प्रति ।
स प्रसादो गुणो ज्ञेयः सर्वसाधारणक्रियः ॥ ११ ॥'

प्रसादस्तु स्वच्छता शब्दार्थयोः[1] । स च सर्वरससाधारणो गुणः सर्वरचनासाधारणश्चेति[2] व्यङ्ग्यार्थापेक्षयैव मुख्यतया[3] व्यवस्थितो मन्तव्यः ।

'श्रुतिदुष्टादयो दोषा अनित्या ये च दर्शिताः ।
ध्वन्यात्मन्येव शृङ्गारे ते हेया इत्युदाहृताः ॥ १२ ॥'

---

धारामाश्रित इत्यसमस्ततैव दीप्तिनिबन्धनम् । एवं माधुर्यदीप्ती परस्परप्रतिद्वन्द्वितया स्थिते शृङ्गारादिरौद्रादिगते इति प्रदर्शतया तत्समावेशवैचित्र्यं हास्यभयानकबीभत्सशान्तेषु दर्शितम् । हास्यस्य शृङ्गाराङ्गतया माधुर्यं प्रकृष्टं विकासधर्मतया चौजोऽपि प्रकृष्टमिति साम्यं द्वयोः । भयानकस्य मग्नचित्तवृत्तिस्वभावत्वेऽपि विभावस्य दीप्ततया ओ[1]जः प्रकृष्टं माधुर्यमल्पम् । बीभत्सेऽप्येवम् । शान्ते तु विभाववैचित्र्यात्कदाचिदोजः प्रकृष्टं कदाचिन्माधुर्यमिति विभागः । समर्पकत्वं सम्यगर्पकत्वं हृदयसंवादेन प्रतिपत्तॄन्प्रति स्वात्मावेशेन व्यापकत्वम् । झगिति शुष्ककाष्ठाग्निदृष्टान्तेनाकलुषोदकदृष्टान्तेन[2] च तदकालुष्यं प्रसन्नत्वं नाम सर्वरसानां गुणः । उपचारात्तु तथाविधे व्यङ्ग्येऽर्थे यच्छब्दार्थयोः समर्पकत्वं तदपि प्रसादः । तमेव व्याचष्टे—**प्रसादेति** । ननु रसगतो गुणस्तत्कथं शब्दार्थयोः स्वच्छतेत्याशङ्क्याह—**स चेति** । चशब्दोऽवधारणे । सर्वरससाधारण(ण्य)मेव गुणः । स एव च गुण एवंविधः सर्वा चेयं रचना शब्दगतार्थगता चेति समस्ता चासमस्ता च तत्र साधारणः । अर्थस्य तावत्समर्पकत्वं व्यङ्ग्यं प्रत्येव संभवति नान्यथा । शब्दस्यापि स्ववाच्यात्मकत्वं नाम कियदलौकिकं येन गुणः स्यादिति भावः । एवं माधुर्यौजःप्रसादास्त्रयो गुणा उपपन्नाः । भामहाभिप्रायेण ते च प्रतिपन्नास्वादमया मुख्यतया तत आस्वाद्ये उपचरिता रसे ततस्तद्व्यञ्जकयोः शब्दार्थयोरिति तात्पर्यम् । एवमसमत्पक्ष एव गुणालंकारव्यवहारो विभागेनोपपद्यत इति प्रदर्श्य नित्यानित्यदोषविभागोऽप्यस्मत्पक्ष एव संगच्छत इति दर्शयितुमाह—**श्रुतिदुष्टादय इत्यादि** । वान्तादयोऽप्यसभ्यस्मृतिहेतवः । श्रुतिदुष्टा अर्थदुष्टा वाक्यार्थबलादश्लीलार्थप्रतिपत्तिकारिणः । यथा—'छिन्द्रान्वेषी महांस्तब्धो घातायैवोपसर्पति' । कल्पना दुष्टा तु द्वयोः पदयोः कल्पना । यथा 'कुरु रुचिम्' इत्यत्र क्रमव्यत्यासे । श्रुतिकष्ट(टु)स्तु अधाक्षीत् अक्षोत्सीत् तृणेढि इत्यादि । शृङ्गार इत्युचितरसोपलक्षणार्थम् । वीरशान्ताद्भुतादावपि तेषां

1. 'शब्दार्थयोरिति' क-ख. 2. 'इति' ग-पुस्तके नास्ति. 3. 'मुख्यतया द्रष्टव्य.' ग.

1. 'तेजः' क-ख. 2. 'दृष्टान्तं' ग.



अनित्या दोषाश्च ये श्रुतिदुष्टादयः सूचितास्ते[1]ऽपि न वाच्यार्थमात्रे न च व्यङ्ग्ये शृङ्गारे शृङ्गारव्यतिरेकिणि वा ध्वनेरनात्मभावे[2] । किं तर्हि ध्वन्यात्मन्येव शृङ्गारेऽङ्गितया व्यङ्ग्ये ते[3] हेया इत्युदाहृताः । अन्यथा[4] हि तेषाम[5]नित्यदोषतैव न स्यात् । एवम[6]यमसंलक्ष्यक्रमो[7]द्द्योत्यध्वनेरात्मा प्रदर्शितः सामान्येन ।

'तस्याङ्गानां प्रभेदा ये प्रभेदाः स्वगताश्च ये ।
तेषामानन्त्यमन्योन्यसंबन्धपरिकल्पने ॥ १३ ॥'

अङ्गितया व्यङ्ग्यो रसादिर्विवक्षितान्यपरवाच्यस्य ध्वनेरेक आत्मा य उक्तस्तस्याङ्गानां वाच्यवाचकानुपातिनामलंकाराणां ये प्रभेदा निरवधयो[8] ये च स्वगतास्तस्याङ्गिनोऽर्थस्य रसभावतदाभासतत्प्रशमलक्षणा विभावानुभावव्यभिचारिप्रतिपादनसहिता अनन्ताः स्वाश्रयापेक्षया निःसीमानो विशेषास्तेषामन्योन्यसंबन्धपरिकल्पने क्रियमाणे कस्यचिदन्यतमस्यापि रसस्य प्रकाराः परिसंख्यातुं न शक्यन्ते किमुत सर्वेषाम् । तथा हि—शृङ्गारस्यैवाङ्गिनस्तावदाद्यौ[9] द्वौ[10] भेदौ । संभोगो विप्रलम्भश्च । संभोगस्य च परस्परप्रेमदर्शनसुरतविहरणादि[11]लक्षणाः प्रकाराः[12] । विप्रलम्भस्याप्यभिलाषेर्ष्याविरहप्रवासविप्रलम्भादयः । तेषां च प्रत्येकं[13] विभा-

---

वर्जनात् । **सूचिता इति** । न त्वेषां विषयविभागप्रदर्शनेनानित्यत्वं भिन्नवृत्तादिदोषेभ्यो विविक्तं प्रदर्शितम् । नापि गुणेभ्यो व्यतिरिक्तं दोषत्वम् । बीभत्सहास्यरौद्रादौ त्वेषामस्माभिरुपगमात् शृङ्गारादौ च वर्जनादनित्यत्वं समर्थितमेवेति भावः । वृत्त्यार्थं प्रकाशयति—**अनित्या इति** । इत्थमसंलक्ष्यक्रमव्यङ्ग्यं सामान्येन प्रदर्श्योपसंहरन्नाह—**एवमित्यादि** ।

अङ्गानामित्यलंकाराणाम् । **स्वगता इति** । आत्मगताः संभोगविप्रलम्भाद्या आत्मीयविभावादिगतास्तेषां निष्ठाप्रकारेणाङ्गाङ्गिभावे का गणनेति भावः । वृत्त्यार्थं प्रकाशयति—**अङ्गितयेत्यादिना** । **परस्परप्रेमदर्शनेति** । परस्परं प्रेम्णा दर्श-

1. 'तेऽपि वाच्येऽर्थमात्रे' क-ख. 2. 'ध्वन्यात्मभूते किं तर्हि' क-ख. 3. 'ये ते' क-ख. 4. 'तथाहि' ग. 5. 'अनित्यत्वदोषमेव' क-ख. 6. 'अयं' क-ख-पुस्तकयोर्नास्ति. 7. 'क्रमद्योतो' क-ख. 8. 'निरवयवा' ग. 9. 'शृङ्गारस्य तावदाद्यौ' ग. 10. 'द्वौ' क-ख-पुस्तकयोर्नास्ति. 11. 'विरहणादि' ग. 12. 'प्रकारा लक्षणाः' क-ख. 13. 'प्रत्येकं' ग-पुस्तके नास्ति.

